**त्रिपुरा**। त्रयः पन्थानो यस्यास्सा। तत्पुरुषानङ्गीकारादेव "पथःसंख्याव्ययादेः" इति नपुंसकत्वं न। चर्षणीशब्दो वैदिकनिघण्टुरीत्या प्रजावाचकः[१]। विश्वाः समस्ताश्चर्षणयः प्रजा[२] यस्यां सा **विश्वचर्षणी** देव्येव। समस्तप्राण्युत्पादिकेति यावत्। विश्वदृष्टिर्वा[३]। इदमत्र बोध्यम्—"तदैक्षत बहु स्यां प्रजायेयेति" श्रुतिसिद्धं यद् ब्रह्मणः प्राथमिकमीक्षणं तदेव सर्व्वजनकं[४] तदेवेच्छारूपं कृतिरूपं च। "सोऽकामयत, तपोऽकुरुत" इति श्रुत्यन्तरात्। "स्वाभाविको ज्ञानबलक्रिया च" इति श्रुत्याऽप्येकैव ब्रह्माभिन्ना प्राथमिकी वृत्तिर्ज्ञानेच्छाकृतिरूपेति प्रतिपाद्यते। सा वृत्तिरिच्छाज्ञानक्रियासमष्टिरूपत्वाच्छान्ते[५]त्युच्यते, पश्यन्तीमध्यमावैखरीसमष्टिरूपत्वात्परेत्युच्यते, वामाज्येष्ठारौद्रीसमष्टिरूपत्वादम्बिकेत्युच्यते। सा शान्तात्मिका देवतैव श्रीचक्रस्थं बिन्दुचक्रम्। तदुक्तं नित्याहृदये परब्रह्म प्रक्रम्य—

"प्रसृतं विश्वलहरीस्थानं मातृत्रयात्मकम्।
बैन्दवं चक्रम्"

इत्यादि। तदेव च तिस्रःपुर इत्यादिविशेषणत्रयनिर्दिष्टम्। विशेषणेषु बहुवचनैकवचनाभ्यां विशेष्यस्य त्रि[६]रूपत्वमेकरूपत्वञ्च सूचितम्। तादृशमीक्षावच्छिन्नं ब्रह्म प्रक्रम्य कालिकापुराणेऽप्युक्तम्—

"त्रिकोणमण्डलं चास्या भूपुरञ्च त्रिरेखकम्।
मन्त्रोऽपि त्र्यक्षरः प्रोक्तस्तथा रूपत्रयं पुनः॥
त्रिविधा कुण्डलीशक्तिस्त्रिदेवानाञ्च सृष्टये।
सर्वं त्रयं त्रयं यस्मात्तस्मात्तु त्रिपुरा मता॥"

इत्यादि। अर्थसृष्टिजनकत्वेन तां निर्दिश्य शब्दसृष्टिजनकत्वेनापि तां निर्दिशति **यत्रेति**। **यत्र** यस्यां शान्ताम्बिकादिरूपायां त्रिपुरायाम्। **अकथाः** अकाराद्याः ककाराद्यास्थकाराद्याः षोडश षोडश, **अक्षरा**, अक्षराणि **संनिविष्टा**, संनिविष्टानि। वटबीजे वृक्षवत् सम्यक् नितरां च वर्त्तन्ते। हकारो हि विमर्शस्वरूप एवेति न व्यष्टिविषेण पृथग्गण्यते।

हकारार्णः[७] कलारूपो विमर्शाख्यः प्रकीर्त्तितः।

इति वचनात्। ळकारस्तु लकारान्न भिद्यते। क्षकारस्तु कषसंयोग[८]रूप एव

---

१ पूजावाचक इति पाठः। २ पूजेति पाठः। ३ दृष्टीव इति पाठः। ४ सर्व्वप्रयोजनकमिति पाठः। ५ च्छक्तिरिति पाठः। ६ त्रिवीति पाठः। ७ हकारान्तः, हकारोऽन्त्य इति वा पाठः। ८ सम्पर्क इति पाठः।

न स्वतन्त्रः। तेनाष्टाचत्वारिंशदेव मातृकाः[1]। एत एव मातृकाः। तथा च सूतसंहितायाम्—

एकधा च द्विधा चैव तथा षोड़शधा स्थिता।
द्वात्रिंशद्भेदसम्भिन्ना या तां वन्दे परां[2] कलाम्॥

इति। द्विविधा स्वरव्यञ्जनभेदेन। स्वरः षोड़शरूपो व्यञ्जनं द्वात्रिंशद्रूपम् इति[3] तदर्थः। अचरादि[4]पदद्वये जसो डादेशश्छान्दसः। एवं पूर्व्वार्द्धेन बिन्दुचक्रस्वरूपमुपदिश्य[5] तदधिष्ठात्रीमुपास्यां परदेवतामाह **अधिष्ठायेति**। एनां साम्प्रतमुपदिष्टां त्रिबिन्दुरूपां त्रिपुरामधिष्ठाय काचिदस्ति[6] देवता। 'अस्तिर्भवन्तोपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्ति' इति कात्यायनवचनादस्तेरध्याहारः, उत्तरमन्त्रस्थक्रियया वा ल्यपोऽन्वयः। सा देवता **अजरा** मरणरहिता। "जॄष् वयोहानौ" इत्यत्र हानिपदेनायुषो नाशस्यैव कथनात्। **पुराणी** अनादिः, जन्मरहिता। देवतानां ब्रह्मविष्णुशिवादीनामतिप्रसिद्धानां मध्ये **महत्तरा** सर्वोत्कृष्टा। तासां देवतानां यो **महिमा** तद्रूपा। देवतान्तराणां माहात्म्यस्याप्येषैव निदानम्। एतदुपासनयैव तेषां महिमलाभ इति भावः। त्रिपुरोपनिषदि, तत्तदनुयायिपुराणतन्त्रादिषु च शिवविष्ण्वाद्युपासितानां विद्यानां बहुशः प्रदर्शनात्।

"शम्भुः पूजयते देवीं मन्त्रशक्तिमयीं शुभाम्।"

इत्यादिना निखिलदेवपूजनीयानां प्रतिमाभेदानां पाद्मपुराणे विस्तरेण कथनाच्च। तथाच 'न हि भिक्षुको भिक्षुकान्तरं याचितुमर्हति सत्यन्यस्मिन्नभिक्षुके' इति न्यायेन देवतान्तरोपास्त्यपेक्षया परदेवतोपास्तिरेव ज्यायसीति तु ध्वन्योऽर्थः। तदिदमस्माभिरुक्तं परशिवस्तवे—

त्वद्दत्तैश्वर्य्यभाजः परमशिव कथङ्कारमन्यान् सुरेन्द्रान्
याचे देहीति शक्रद्रुहिणहरिमुखान् भिक्षुकान् भिक्षुकोऽहम्॥
अज्ञोऽपि द्वादशाहक्रतुविकृतिशतस्याङ्ग[7]भूतोऽपि चोक्थ्यो
ज्योतिष्टोमोक्थ्यधर्मानभिलषति न तु द्वादशाहोक्थ्यधर्मान्॥

इति। अजरेत्यादिभिर्ब्रह्मलिङ्गैर्ब्रह्मचक्राधिष्ठात्री[8] देवता परं ब्रह्मैवेत्युक्तम्[9]।

---

१ शम्मातृका इति पाठः। २ परात्परामिति पाठः। ३ इत्यर्थ इति पाठः। ४ अचरादिपदद्वय इत्यादिकम्। ५ मुद्दिश्येति पाठः। ६ कयाचिदिति लेखः। ७ शतोक्थ्याङ्गेति, शतोत्थाङ्गेति च पाठौ। ८ अधिष्ठितेति पाठः। ९ भवतीत्यधिकं पुस्तकान्तरे।

**नवयोनीर्नव चक्राणि दीधिरे नवैव योगा नव योगिनीश्च।**
**नवानां चक्रे अधिनाथाः स्योना नव मुद्रा नव भद्रा महीनाम्॥२॥**

देवतापदस्य विशेष्यताभिप्रायेण स्त्रीत्वम्। अजरादिपदानामतएव श्रुत्यन्तरे नपुंसकत्वेन निर्देशः। तथाच स्पष्टमाथर्वणिका आमनन्ति—

अष्टाचक्रा नवद्वारा देवानां पूरयोध्या।
तस्यां हिरण्मयः कोशः स्वर्गो लोको ज्योतिषावृतः॥
तस्मिन्हिरण्मये कोशे त्र्यरे त्रिप्रतिष्ठिते।
तस्मिन्यद्यक्षमात्मन्वत्तद्वै ब्रह्मविदो विदुः॥

इति। भूपुरादित्रिकोणान्तचक्राष्टकोपरि यः कोशो गर्भीकृतरूपत्रयो बिन्दुरिति यावत्, तस्मिन्यक्षं महद् भूतमस्ति। बहिःपूजाऽयोग्यत्वाद्यक्षपदेन निर्देशः। तत् स्वात्मन्येव ब्रह्मविदो विदुर्नान्य इति तदर्थ इति सेतुबन्धे विस्तरः॥ १॥

एवं बिन्दुचक्रमुक्त्वा त्रिकोणवसुकोणचक्रद्वयसमष्टिरूपं नवयोन्यात्मकं चक्रमुपदेष्टुं द्वितीयामृचमाह—

**"नवयोनीर्नव चक्राणि दीधिरे नवैव योगा नव योगिनीश्च।**
**नवानां चक्रे अधिनाथाः स्योना नव मुद्रा नव भद्रा महीनाम्"॥२**

**तिस्रः पुरो नव योनीर्दीधिरे।** एकमपि बिन्दुचक्रं त्र्यात्मकत्वात् प्रत्येकं रूपत्रयं दध्रे। 'दीधीङ् दीप्तिदेवनयोः' ( पा० धातुसूत्रम् ) इतिच्छान्दसधातोरिदं रूपम्। दीपनं प्रकाशनम्, फलत उत्पादनमिवेह विवक्षितोऽर्थः। शान्तात्वावच्छेदेनेच्छाशक्ति[1]र्ज्ञानशक्तिः क्रियाशक्तिश्चेति तिस्रो देवता उपादधात्, अम्बिकात्वावच्छेदेन ब्रह्मविष्णुरुद्रान्स्त्रीरूपान् वामाज्येष्ठारौद्रीशक्ति[2]नामकानजनयत्, परात्वावच्छेदेन पश्यन्तीमध्यमावैखरीतिवाग्देवता अजीजनदित्यर्थः। सा परदेवतैवैनां त्रिपुरामधिष्ठाय नव योनीश्चक्रे इति वाऽन्वयः। एता नव देवता एव नवयोनिचक्रात्मना परिणता इति तु वासनाध्वनिः। किञ्च त्रैलोक्यमोहनादीनि नवचक्राणि जातजनिष्यमाणानि संस्कारात्मना नवयोनिष्वेव सन्ति तदेतदाह **नवचक्राणि** कर्तॄणि **नवयोनीर्दीधिरे इति।** शक्तित्रिकोणद्वयवह्नित्रिकोणैकेन हि नवयोनिचक्र[3]निष्पत्तिः। प्रतित्रिकोणं तिस्रो रेखा इति नवानां रेखाणां योगा अपि कोणरूपा नवैव, तेन नव योगिनीर्दीधिरे। नव

[1] शक्तिः क्रियाशक्तिर्ज्ञानशक्तिरिति पाठः। [2] शक्तिरूपानिति पाठः। [3] चक्रं सिध्यति इति पाठः।

**एका सा आसीत्प्रथमा सा नवासीदासोनविंशदासोनविंशत् ॥**
**चत्वारिंशदथ* तिस्रः समिधा उशतीरिव मातरो मा विशन्तु ॥३॥**

---

चक्राणामिह सत्त्वादेव तत्तत्प्रकटादियोगिनोनवकमपि कोणात्मनैहैव तिष्ठतीति भावः ।

देशकालानवच्छिन्नं तदूर्द्ध्वं परमं महः ।

इत्यादिव्यवहाराद्देशाद्यवच्छिन्नो[1] बिन्दुचक्रादिप्रपञ्चो ब्रह्मणोऽधोऽधस्तिष्ठतीति लभ्यते । एतन्मूलक एव श्रीचक्रस्य मेरुप्रस्तारोऽपि । तेनैकस्मिंश्चक्रे भूपुरादि बिन्द्वन्ता उपर्य्युपरि नव भूमिकाः, तासामधिपतयोऽपि त्रिपुराचक्रेश्वर्य्यादिनामानो नवैव । ता अपि नवयोनिष्वेव सूक्ष्मरूपेण क्रमेण तिष्ठन्तीत्याह चक्रे नवानां महोनामधिनाथा अपि कर्त्र्यौ नवयोनीर्दीधिरे इति[2] । स्योना इति चक्रेश्वरी-विशेषणम्, सुखहेतुभूता इत्यर्थः । नवमुद्राः सङ्क्षोभिण्यादियोन्यन्ता अपि इहैव स्थिताः । नवभद्रास्तु तन्त्रे विवृताः—

'धर्म्माधर्म्मौ तथाऽऽत्मानो मातृमेये तथा प्रमा ।'

इति । पुण्यं, पापम्, आत्मा, अन्तरात्मा, परमात्मा, ज्ञानात्मा, प्रमाता, प्रमेयं, प्रमेति नवकं तदर्थः । आत्मचतुष्टयस्वरूपविवरणमात्मोपनिषदि द्रष्टव्यम् ।

चक्रं नवात्मकमिदं नवधा भिन्नमन्त्रकम् ।

इत्युपबृंहणदर्शनात् । भद्रापदेन मन्त्रा वा ग्राह्याः । ते च नवचक्रेश्वरीमन्त्रा इति केचित् । सान्निध्यान्मुद्रामन्त्रा एवेति युक्तम् । बिन्दुत्रिकोणवसुकोणात्मक-चक्रत्रयरूपे संहारचक्र एव सर्वं श्रीचक्रं सूक्ष्मरूपेण तिष्ठतीति पिण्डितोऽर्थः । आपत्कालिकसङ्क्षिप्तपूजाप्रकारेषु वसुकोणादिबिन्द्वन्तमात्रपूजाविधिर्यस्तन्त्रेषूपलभ्यते, तत्रेय[3]मेव श्रुतिर्मूलम् । अत्र सर्व्वत्रोपबृंहणानि तन्त्रपुराणवचनानि तु विस्तरभयान्न लिख्यन्ते ॥२॥

अथ दशारद्वयमन्त्रस्वरूपं स्थितिचक्रमुपदेष्टुं तृतीयामृचमाह—

**"एका सा आसीत्प्रथमा सा नवासीदासोनविंशदासोनविंशत् ॥**
**चत्वारिंशदथ[4] तिस्रः समिधा उशतीरिव मातरो मा विशन्तु"॥३॥**

आभ्यो नवयोनिभ्यः सूक्ष्मभूतानि पञ्च स्थूलभूतानि पञ्चेति भूतदशकमभवत् ।

---

* दधीति पाठः । १ देशाद्यनवच्छिन्नेति पाठः । २ इति । दीधीङ्दीप्तिदेवनयोरित्तिच्छान्दसो लोटि रूपमिदमिति पाठः । ३ तत्त्वयमेवेति पाठः । ४ दधीति पाठः ।

**ऊर्ध्वंज्वलज्ज्वलनज्योतिरग्रे तमो वै तिरश्चीनमजरं तद्रजोऽभूत्॥**
**आनन्दनं मोदनं ज्योतिरिन्दोरेता उ वै मण्डला*मण्डयन्ति ॥४॥**

---

तेभ्यः स्थूलसूक्ष्मभेदेन शब्दादितन्मात्रदशकं[1] मभूत्। तेभ्यश्च कर्म्मेन्द्रियाणि पञ्च, ज्ञानेन्द्रियाणि पञ्चान्तःकरणानि चत्वारीति चतुर्दशकमभवत्। एताः सर्व्वा अपि देवताः स्त्रीरूपत्वाद्योनिरूपा एव। तदिदं सर्वं—

"भूततन्मात्रदशकप्रकाशालम्बनत्वतः।
द्विदशारस्फुरद्रूपम्…

इत्यादिना तन्त्रे विवृतम्। सैव प्रक्रिया पूर्व्वानुवादपूर्व्वकमिहोपदिश्यते—या **प्रथमा** सर्व्वजगत्कारणभूता देवता **सैकैव पूर्व्वमासीत्** बिन्दुचक्ररूपा **अथ नवासीत्** नवयोन्यात्मना। **अथोनविंशत्** एकोनविंशतिस्वरूपा आस नवयोनयोऽन्तर्दशारयोनयश्चेति। विंशदित्यादिच्छान्दसम्। **अथोनविंशदास** बहिर्दशारयोनीनां मेलनेन। **अथ चत्वारिंशत्तिस्रश्च** पूर्व्वासु च चतुर्दशमेलनेन त्रिचत्वारिंशद्योनिस्वरूपैकैव देवी जातेत्यर्थः। बिन्दुचक्रस्यान्तराकारत्वेन 'एका सा सीद्' इत्यस्य योन्याकृतीनां मध्ये परिगणनम्। समिधा देदीप्यमाना एता **मातरो मा विशन्तु** मां प्रविशन्तु मच्छरीरस्यापि श्रीचक्ररूपत्वादिति स्त्रोत्कृतं प्रार्थनम्। **उशतीरिव** कामयमाना इव, वस्तुतो निष्कामत्वात्। धेनवोऽपि वत्ससामीप्यमिच्छन्त्यो वनाद्द्रुतं यथा गोष्ठं प्रविशन्ति तथैताः प्रविशन्त्वित्यर्थः। इयमेव श्रुतिश्चक्र[2]न्यासविधीनां तन्त्रस्थानां मूलम्। एतासामेव देवतानां स्वशरीरे न्यस्तव्यत्वात्,

"योगिन्यो यास्तु ताः सर्व्वा गेहं कुर्व्वन्तु मे वपुः।"
इति शक्तिन्याससमन्त्रलिङ्गसंवादात्तस्यापि मूलम्॥ ३॥

अथ सृष्टिचक्रे अवशिष्टे वृत्तत्रयविशिष्टं पद्मद्वयमुपदेष्टुं चतुर्थीमृचमाह—

**"ऊर्ध्वं ज्वलज्ज्वलनज्योतिरग्रे तमो वै तिरश्चीनमजरं तद्रजोऽभूत्।**
**आनन्दनं मोदनं ज्योतिरिन्दोरेता उ वै मण्डला मण्डलयन्ति" ॥४॥**

चतुर्दशारमधोऽधो हि द्वे चक्रे अष्टदलषोड़शदलपद्मात्मके वर्त्तेते तयोर्द्धं

---

* मण्डलमिति पाठः। १ दशकमिति नास्ति पु०। २ विधिशक्तन्यासविधीनां तत्रस्थानान्मूलमिति पाठः।

तिस्रश्च* रेखाः सद्मानि भूमेस्त्रिविष्टपास्त्रिगुणास्त्रिप्रकाशाः ।
एतत् पुरं पूरकं पूरकाणामत्र प्रथेते मदनो मदन्या ॥ ५ ॥

---

कर्णिका[1]वृत्ते बाह्यवृत्तमेकमेवं[2] त्रीणि वृत्तानीति कतिपयसिद्धान्तः । अतएव—

'ज्येष्ठारूपं चतुष्कोणं वामारूपं[3] भ्रमि[4]त्रयम्' ।

इत्यत्र भ्रमि[5]त्रयपदस्य वृत्तत्रयान्तरालद्वयवर्त्तिपद्मद्वयलक्षकत्वेन प्राचामाचार्य्याणां व्याख्या युज्यते

...... ........वृत्तत्रितयसं[6]युतम् ।
सरोरुहद्वयं शाक्तैरग्नीषोमात्मकं प्रिये ॥

इति वचनेऽप्येषैव व्याख्या । तानि च वृत्तान्यग्निसूर्य्यसोमगुणत्रयरूपाणीति प्रकृतायामृचि वर्णनेनैव तदन्तराल[7]पद्मद्वयं वर्णितं वेदितव्यम् । अक्षरार्थस्तु अग्रे स्थितिचक्रोत्तरचक्रेषु प्रथमं **तमो वै** तमोगुणात्मकं ज्वलननामकं ज्योतिर्मण्डलमभूत् । ऊर्ध्वज्वलदितिविशेषणेनाग्निज्वालारूपत्वदृढ़ीकारः । ऊर्ध्वभागे कज्जलदर्शनेन तमोरूपत्वदृढ़ीकारश्च । अत एव तेजोमयस्य तमस्त्वोक्तावसाङ्गत्यशङ्कापरिहारायैव 'वै' इत्यव्ययम् । ततः परं **तिरश्चीनं** तिर्य्यक्प्रसारिज्योतिर्मण्डलं रक्तत्वाद्रजोगुणमभूत् । तच्च सूर्य्यरूपम् । अग्निसूर्य्ययोरूर्ध्वतिर्य्यक्प्रसृतेः प्रत्यक्षत्वात् । यदाहुरभियुक्ताः—

गतं तिरश्चीनमनूरुसारथेः प्रसिद्धमूर्ध्वज्वलनं हविर्भुजः ॥ ( माघ० १—२ )

इति । **अजरमिति**विशेषणमग्नितो वैलक्षण्यदृढ़ीकाराय । ततो मोदनं वैषयिकसुखोत्पादकमिन्दोर्ज्योतिर्मण्डलमभूत् । आनन्दपदेन सत्त्वगुणात्मकतोक्ता । सत्त्वाधिक्यस्यैव ब्रह्मानन्दव्यञ्जकत्वात् । उवै इति कोमलामन्त्रणे, एवकारार्थे वा । एवं त्रीणि मण्डलानि वृत्तानि एता मातृः[8] मण्डयन्ति शोभावतीः कुर्व्वन्ति[9]। वृत्तत्रयान्तरालवर्त्तिकमलयुगलविशिष्टं श्रीचक्रं कार्य्यक्षमं, न[10] केवलं मन्वस्रान्तमित्यर्थः । मन्वस्रादिबिन्द्वन्तपूजाया आपत्कल्पत्वादिति भावः ॥ ४ ॥

---

* तिस्रो रेखा इति पाठः । १ कणिकेति पाठः । २ मेव त्रीति पाठः । ३ चकाराघटितः पाठः । ४ भूमित्रयमिति पाठः । ५ भूमित्रयेति पाठः । ६ संभूतमिति पाठः । ७ अन्तरालपद्मेति पाठः । ८ मातृमिति पाठः । ९ कुर्व्वत इति पाठः । १० चेमेणेति पाठः ।

**मदन्तिका मानिनी मङ्गला च सुभगा च सा सुन्दरी शुद्धमत्ता*।**
**लज्जा मतिस्तुष्टिरिष्टा च पुष्टा लक्ष्मीरुमा ललिता लालपन्ती ॥६॥**

---

नवमं भूगृहात्मकं चक्रमुपदेष्टुं पञ्चमीमृचमाह—

**तिस्रश्च रेखाः सदनानि भूमेस्त्रिविष्टपास्त्रिगुणास्त्रिप्रकाशाः ।**
**एतत् पुरं पूरकं पूरकाणामत्र प्रथेते मदनो मदन्या ॥ ५ ॥**

तन्त्रान्तरे कर्णिकावृत्तद्वयातिरिक्तानि पद्मद्वयाद्बहिस्त्रीणि वृत्तानि विहितानि दृश्यन्ते। तत्पक्षे **तिस्रश्च रेखा** इत्येतावन्मात्रं वृत्तरेखात्रयपरं नेयम्। न[1] चैवं सति कर्णिकाद्वयस्यैवावशेषेण मण्डलत्रयकथनासङ्गतिरिति वाच्यम्। तन्त्रराजे मन्वश्राद्बहिर्मर्यादावृत्तस्याष्टदलकर्णिकावृत्तातिरिक्तस्य कथनेनास्याः श्रुतेस्तन्मूलत्वोपपत्तेः। **भूमेः सदनानि** तिस्रो रेखा इति सामानाधिकरण्यं त्वक्लिष्टोऽर्थः। ता एव **त्रिविष्टपा** भुवनत्रयरूपाः, देवताऽऽवासभूमित्वात् स्वर्गरूपा वा। **त्रिगुणा** गुणत्रयरूपाः, **त्रिप्रकाशाः** सूर्य्यचन्द्राग्निरूपवृत्तत्रयप्रकाशरूपाः। श्रीचक्रवर्णनमुपसंहरति **एतदिति**। सार्द्धचतुष्टयेन वर्णितं पुरं श्रीपुरमिव सपरिवारपरदेवतानिवासस्थानं चक्रं पूरकाणां भक्तमनोरथपूरकाणां शिवविष्णवादीनामपि पूरकं मनोरथपूरकम्। अत्र श्रीचक्रे मदनः शिवः[2] कामेश्वरः, मदन्या शिवकामसुन्दरी च प्रथेते स्वमयूखात्मकाणिमादिनाऽनादिरूपविस्तारेण विलसत इत्यर्थः। मदनी आ इति च्छेदो वा। पुंयोगलक्षणो ङीष्। आप्रथेते इत्यन्वयः। "छन्दसि परेऽपि, व्यवहिताश्च" ( पा० सू० ८१, ८२ पा० ४ अ० १ ) इत्यभ्यनुज्ञानात् ॥ ५ ॥

चैत्रेषु विविधेषु नामभेदेन यानि देवीरूपाणि पुराणेषु तन्त्रेषु चोपलभ्यन्ते तानि सर्व्वाण्यस्या एवेत्युपदेष्टुं षष्ठीमृचमाह—

**मदन्तिका मानिनी मङ्गला च सुभगा च सा सुन्दरी शुद्धमत्ता ।**
**लज्जा मतिस्तुष्टिरिष्टा च पुष्टा लक्ष्मीरुमा ललिता लालपन्ती ॥ ६॥**

पद्मपुराणे देवीतीर्थपरिगणनावसरे कतिपयानि रूपाण्युक्तानि—

---

* सिद्धिमत्तेति पाठः। १ कर्णिकावृत्तानि त्रीणि बहिश्च त्रीणि वृत्तानीत्यर्थः सम्पद्यते। न चैवं रेखाया असङ्गतिरिति वाच्यमिति पाठः। २ शिवेति नास्ति पु०।

**इमां विज्ञाय सुधया मदन्ति परिस्रुता तर्पयन्तः स्वपीठम्।**
**नाकस्य पृष्ठे महतो वसन्ति परन्धाम त्रैपुरं चाविशन्ति॥ ७॥**

---

'प्रयागे ललिता देवी'...इत्यादि,
लङ्कायां मङ्गला नाम त्रिकूटे भद्रसुन्दरी॥
करवीरे महालक्ष्मीस्तथा देवी विनायके।
देवदारुवने पुष्टिर्मेधा काश्मीरमण्डले॥
..........तुष्टिर्वत्सेश्वरे तथा॥

इत्यादीनि अन्यान्यपि रूपाणि तत्र तत्रान्वेष्याणि। मदन्तिकेत्यादिचतुर्दशकं वाराणस्यां विशालाक्षीत्यादीनामुपलक्षणम्। यदेव किञ्चिद्देवीरूपं तत्त्वेन लालप्यमानाऽपि सैवेत्यर्थः। लालपन्तीपदं लालप्यमानापरम्। 'प्रातिपदिकादुच्चरन्ती विभक्तिः, प्रातिपदिकार्थो विशेषक इत्याह' इति शाबरभाष्ये (मी० सू० २५ पा० १ अ० १) प्रयोगदर्शनात्। अथवा पञ्चदशाक्षराणां पञ्चदशेमा देवताः। शुद्धमत्तेत्यत्र सिद्धिमत्तेत्याथर्वणः पाठः॥ ६॥

एवं वर्णिताया देवताया उपास्तिं विधातुं सप्तमीमृचमाह—

**इमां विज्ञाय सुधया मदन्ति परिस्रुता तर्पयन्तः स्वपीठम्।**
**नाकस्य पृष्ठे महतो वसन्ति परं धाम त्रैपुरं चाविशन्ति॥ ७॥**

**इमां** पूर्वोक्तां परदेवतां **विज्ञाय** विधिविशेषपूर्व्वकं ज्ञात्वा गुरूपसदनदीक्षादिपूर्व्वकमुपास्तिं स्वीकृत्य **स्वपीठं** स्वशरीराभिन्नं श्रीचक्रं तत्र देवतां सावरणां **सुधया परिस्रुता** पीयूषीकृतेन द्रव्येण **तर्पयन्त**स्तर्पणाद्युपचारैः पूजयन्तो ये **मदन्ति** विषयभानप्रमोषपूर्व्वकं स्वात्मैकविषयकनिर्व्विकल्पविषयभाजो भवन्ति ते **महतो नाकस्य पृष्ठे वसन्ति त्रैपुरं परं धाम** चाविशन्ति चेत्यर्थः। अमृतीकरणं संस्कारान्तराणामुपलक्षणम्। तदभिमानिदेवतायां सुधादेवीति संविच्च संस्कारमन्त्रवर्णादवगम्यते।

'मन्त्रसंस्कारसंशुद्धं तदेवामृतमुच्यते।'

इति रुद्रयामलञ्च। महानाकपृष्ठवासस्त्रिविधपुरुषार्थफलोपलक्षकः। त्रिपुरायाः परं धाम तु मुक्तोपसर्तव्यं स्वरूपम्, तेन मोक्ष उच्यते। सर्वान् कामान्मोक्षं चाप्नुवन्तीति भावः।

'एवं सर्व्वगता शक्तिः सा ब्रह्मेति विविच्यते ॥
सगुणा निर्गुणा चेति द्विविधोक्ता मनीषिभिः ॥
सगुणा रागिभिः पूज्या निर्गुणा तु विरागिभिः ॥
धर्मार्थकाममोक्षाणां स्वामिनी सा निराकुला ॥
ददाति वाञ्छितानर्थानर्चिता विधिपूर्व्वकम् ॥'

इति देवीभागवते स्मरणात् ।

श्रीविद्यादीक्षितो द्रव्यवता स्वपीठार्चनेन निर्व्विकल्पवृत्तिद्वारा सर्वान् कामान् भावयेदिति भावनाविशिष्टभावनान्तरविधिः पर्य्यवस्यति । सर्व्वथा मतिमान्द्येत्वितेत्यादिकल्पसूत्रादिगतविशेषणविधीनामियमेव श्रुतिर्मूलम् । 'विज्ञाय तपर्य्यन्त' इत्यधिकारिविशेषणतया श्रुतमपि तर्पणं फलभावनाकरणत्वेन सम्बध्यते 'हिरण्यदा अमृतत्वं भजन्ते' इतिवत् । अप्राप्तार्थकत्वाद्विधिशक्तिप्रतिबन्धाभावाच्च मन्त्रत्वेऽपि न विधिव्याघातः । 'वसन्ताय कपिञ्जलानालभते', 'प्रणीयादिन्नाधमानाय तव्यान्', 'आस्य जानन्तो नाम चिद्विवक्तन' इत्यादिमन्त्राणामपि बहुशो विधित्वस्वीकारात् । वस्तुतो मदन्तीत्यस्य यदाग्नेयवाक्य इव लेट्त्वकल्पनया भावार्थाधिकरणन्यायेन चिद्देव्यभिन्नात्ममात्रविषयकवृत्तिविशेषबोधकमदधात्वर्थस्यैव करणत्वम् । अन्तर्यागपदवाच्यताऽपि तस्यैव, यजतेर्वृत्तिविशेषवाचकत्वात् । परिस्रुतेति तु मत्वर्थलक्षणया धात्वर्थेनान्वेति, भावनान्वितयोरुभयोररुणैकहायनीन्यायेन वा पार्ष्ठिकोऽन्वयः । प्रतितिष्ठन्तीत्यस्यैव 'नाकस्य पृष्ठे' इत्यादेर्भाव्यसमर्पकत्वम् । चकारेण फलान्तरसमुच्चयकथनात् । 'पूत एव तेजस्व्यन्नाद इन्द्रियावो पशुमान् भवति' इत्यत्रेव सम्बन्धिसम्वलिताऽधिकारत्वम् । अनेकेषां पुरुषार्थानां व्यासज्यवृत्तिफलत्वमिति यावत् । न पुनः 'सर्व्वेभ्यः कामेभ्य' इतिवत्प्रत्येकपर्य्याप्तम् । तर्पणन्तु फलवदफलन्यायेनाङ्गम् । 'इमां विज्ञाय' इति विद्वत्ताऽधिकारितावच्छेदको धर्म्मः । अत एव—

'कुलदीक्षाविहीनानां नाधिकारो द्विजन्मनाम् ।'

इति समयाचारस्मृतिरुपपद्यते । इह 'तर्पयन्त' इति शतृप्रत्ययेन बहिर्यागविधौ वक्ष्यमाणे ( १२ ऋचि ) 'निवेदयन्, स्वात्मीकृत्य' इति च शतृल्यप्प्रत्ययाभ्यां देवतानिवेदनस्वात्मीकरणयोः समानकालत्वकथनाद् दिव्यपानविधावेव श्रुतेः स्वारस्यम्, न वीरपानविधौ । तेन—

**कामो योनिः कमला वज्रपाणिर्गुहा हसा मातरिश्वाऽभ्रमिन्द्रः ॥**
**पुनर्गुहा सकला मायया च पुरूच्येषा विश्वमाताऽऽदिविद्या ॥ ८॥**

---

पानन्तु त्रिविधं प्रोक्तं दिव्यवीरपशुक्रमैः ।
दिव्यं देव्यग्रतः पानं वीरमुद्रासने कृतम्[1] ॥

इति स्मृतेर्मूलं श्रुत्यन्तरमन्वेष्यम् । पुरुषार्थनिषेधास्तु रागप्राप्तैकविषयत्वात् क्रत्वर्थत्वेन विहितेषु न प्रवर्त्तन्त एव ।

येन केनाप्युपायेन शिवे चित्तं निवेशयेत् ।
तस्मात्केनाप्युपायेन मनः कृष्णे निवेशयेत् ॥

इत्यादिपौराणवचसामीदृशाशय एव स्वारस्यात् । स्पष्टानां तत्र वचसां क्रत्वर्थसर्व्ववर्णोद्देशेन विधायकानां बहुलमुपलम्भात् । तेषां चेदृशानेकश्रुतिप्रत्यक्षश्रुतिमूलकत्वेन बलाबलचिन्तानवकाशादिति दिक् ॥ ७ ॥

एवं पररूपोपास्तिं विधाय सूक्ष्मरूपोपास्तिविधित्सयाऽष्टमीमृचमाह—

**कामो योनिः कमला वज्रपाणिर्गुहा हसा मातरिश्वाऽभ्रमिन्द्रः ॥**
**पुनर्गुहा सकला मायया च पुरूच्येषा विश्वमाताऽऽदिविद्या ॥ ८॥**

इह पञ्चदशाक्षरो मन्त्र उद्ध्रियते । स च स्त्रीदेवत्यत्वाच्चिद्रूपत्वाच्च विद्यापदेनोच्यते । क्वचि[2]त्ताद्दृश्यपि वेदमाता गायत्री कण्ठरवेण पठ्यते । अस्यास्तु प्रत्यक्षरं तद्वाचकपदमन्तरेण कतिपयानां निर्द्देशादतिरहस्यत्वं मन्त्रस्य, तद्द्वारा तदधिकारिककर्म्मणाञ्च तथात्वं ध्वनितम् । किं बहुना गायत्र्यप्यादिविद्योद्धारिकैवेति त्रिपुरातापिन्यां स्पष्टं प्रदृश्यते । भागवतप्रथमश्लोकोऽप्येवमेवोपबृंहयति—

सर्व्वचैतन्यरूपां तामाद्यां विद्याञ्च धीमहि ।
बुद्धिं या नः प्रचोदयात् ॥

इति । अतिरहस्यत्वादेव नाथचरणैकावगमनीयोऽयं मन्त्रः । मातरिश्वा कामस्य चतुर्मुखवाचकमक्षरं, कमलायोनी चतुर्थैकादशस्वरौ । इन्द्रवज्रपाणी तृतीयमन्त्रस्याक्षरम्, गुहामाये भुवनेश्वरीबीजम्, अभ्रं तस्या एवाद्यमक्षरं हकारः[3] शेषपञ्चकं स्वरूपम् । एषा आदिविद्या पुरूची पुरातनी विश्वमाता जगज्जनयित्री, विद्याक्षरैर्जगदुत्पत्तेर्योगिनीहृदये सम्प्रदायार्थप्रकरणे सविस्तरं वर्णनात् । मन्त्रा-

---

१ कृते इति पाठः । २ क्वचिदिति पुस्तकान्तरे नास्ति । ३ सारकमिति पाठः ।

**षष्ठं सप्तममथ वह्निसारथिमस्या मूलत्रिकमावेशयन्तः ॥**
**कथ्यं कविं कल्पकं काममीशं तुष्टुवांसो अमृतत्वं भजन्ते ॥९॥**

र्थस्तु दत्तात्रेयागस्त्यादिभिर्बहुभिस्तत्त्वभेदेन बहुधोक्तः, स चास्माभिर्वरिवस्यारहस्ये यथामति सङ्गृह्य दर्शित इति तत एवावगन्तव्यः ॥ ८ ॥

कामराजोपासितां विद्यामुपदिश्य लोपामुद्रोपासितां विद्यामुपदेष्टुं नवमीमृचमाह—

**षष्ठं[1] सप्तममथ वह्निसा[2]रथिमस्या मूलत्रिकमावे[3]शयन्तः ॥**
**कथ्यं कविं कल्पकं काममीशं तुष्टुवांसो अमृतत्वं भजन्ते ॥९॥**

**अस्या** एव विद्याया **मूलत्रिकं** प्राथमिकमचरत्रयम्, उन्मूल्येति शेषः। तत्स्थानेऽपि षष्ठादिवर्णत्रयमेव निवेशयन्तो जापका विद्याद्वयान्यतरेण संशुद्ध[4]सत्त्वोपाधिकं परशिवं **तुष्टुवांसः** स्तुवन्तो जपन्तः, **अमृतत्वं भजन्ते** विद्याजपेन मोक्षं भावयेदित्यर्थः। ईशं विशिनष्टि—**कामम्**, 'सोऽकामयत बहु स्यां प्रजायेय' इति श्रुतिप्रतिपाद्यत्वेनेक्षत्यधिकरणे निर्णीतम्। **कल्पकं** जगत्कल्पनाधिष्ठानं जन्माद्यधिकरणोक्तम्, **कविम्**, वेदप्रणेतारम्, **कथ्यम्**, वेदवेद्यम्, शास्त्रयोन्यधिकरणे वर्णकद्वयेनोक्तं परं ब्रह्मैवेति तु विशेषणसमर्पितोऽर्थः। 'अजरा पुराणो' इत्यादिभिर्ब्रह्मलिङ्गैरिह पुंलिङ्गैर्वक्ष्यमाणकामकलाध्यानगतस्त्रीलिङ्गैश्च परदेवतायास्त्रिविधं ध्यानं विहितं भवति। तथाचोपबृंहितं कुलार्णवे—

पुंरूपां[5] वा स्मरेद्देवीं स्त्रीरूपां[6] वा विचिन्तयेत्।
अथवा निष्कलं ध्यायेत्सच्चिदानन्दलक्षणम् ॥

इति। यद्यपि परोपास्तौ निष्कलं जपेत् पुंरूपं बहिर्यागे स्त्रीरूपमध्येयमिति व्यवस्था सुवचा तथाऽपि स्त्रीपुंसयोः समप्राधान्यस्य वक्ष्यमाणतया सम्प्रदायाच्चैच्छिक एव विकल्पः। मनुचन्द्राद्युपासितविद्यानामन्यासामपि त्रिपुरातापिन्या उद्धारदर्शनेऽपि प्रकृते द्वयोरेवोद्धारस्तास्वेनयोराधिक्यध्वननार्थः। अत एव ज्ञानार्णवे द्वादशविधा विद्या उद्धृत्य

'विद्याद्वयमिदं भद्रे देवानामपि दुर्लभम्'।

१ षष्ठां सप्तमाम्, षष्ठसप्तममिति च पाठौ। २ वह्निसारारथिमिति पाठः। ३ आदेशयन्त इति पाठः। ४ संशुध्येति पाठः। ५ रूपमिति पाठः। ६ स्त्रीरूपमिति पाठः।

त्रिविष्टपं त्रिमुखं विश्वमातुर्नवरेखाःस्वरमध्यं तदीले ।
बृहत्तिथीर्दशपञ्चादिनित्या सा षोड़शी पुरमध्यं बिभर्त्ति ॥१०॥

इत्यादिनोपबृंहितम् । अनयोरपि मध्ये कादिविद्याया एव प्रथममुद्धाराद‌ाधिक्य-ध्वनिः । अत एव—

'श्रीविद्यैव तु मन्त्राणां तन्त्रकादिर्यथा परा' ।

इति ब्रह्माण्डपुराण उपबृंहणम् ।

वस्तुतः सर्वासां विद्यानामभेदात्तारतम्योक्तिः प्रशंसामात्रमिति समर्थितं सेतु-बन्धेऽस्माभिः ।

अत एव श्रीमदाचार्य्यभगवत्पादैर्वैपरीत्येनैनयोरुद्धारः प्रदर्शितः सौन्दर्य्य-लहर्य्याम् । तत्रापि प्रकृतस्तुत्यानुगुण्याय शिवशक्तिकामपदानां चान्यथा व्याख्यानं कतिपयानां क्लिष्टत्वान्निरर्थकत्वाच्च नादर्तव्यम् । अत्रान्तर्यागस्यैव प्रकरणित्वेन तदीयद्रव्यानुवादेन गुणान्तरसमुच्चयस्य द्वादश्यामृचि विधास्यमानत्वेन प्रकरणा-नुवृत्तेर्वक्तव्यतया तन्मध्यपतितस्य जपस्य प्रकरण्यन्तर्यागाङ्गत्वात् । 'अमृतं भजन्ते' इति अपापलोकश्रवणवदर्थवादः । मन्त्रत्वेऽपि विधित्वस्यैवार्थवादत्वस्यापि स्वीकारे बाधकाभावात् । 'तिस्रः पुरः' इत्यादेस्त्वन्तर्यागविधिशेषत्वेऽपि नार्थ-वादत्वम् । विधिशेषत्वस्यार्थवादव्याप्यत्वे मानाभावात् । अर्थवादत्वेऽपि वा भूतार्थवादत्वेन स्वार्थे प्रामाण्याच्च ।

न च द्वादश्यामृचि स्थूलोपास्तिर्भिन्नैव बहिर्यागरूपा विधीयत इति वाच्यम् । तथाऽपि पञ्चदश्यामृचि मदधात्वर्थविवरणेनोपसंहारदर्शनात्प्रकरणानुवृत्तेर्दुर्वारत्वात् ।

वस्तुत उपास्तित्रयस्य समप्राधान्यमेव, विधित्रयेऽपि फलश्रवणेनान्यतमस्य प्रकरणित्वकल्पने विनिगमनाविरहात् । आग्नेयादिषट्कस्येव मिलितानामेव च फलजनकत्वम् ।

अन्तर्यागबहिर्यागौ गृहस्थः सर्व्वदाऽऽचरेत् ॥
चक्रराजार्चनं विद्याजपो नाम्नाञ्च कीर्तनम् ॥
भक्तस्य कृत्यमेतावदन्यदभ्युदयं विदुः ॥

इत्यादिवचनात् ।

अधिकारिविशेषेण तु केवलान्तर्यागजपयोः फलजनकत्वन्तु वचनात् । असोम-याजिनोऽग्नीषोमीयपुरोडाशसाहित्याभावेऽपि फलसिद्धिवदित्यादिकं न्यायविद्भि-रूह्यम् ॥ ८ ॥

अथ स्थूलोपास्तिविधित्सया मूलदेवताया अन्तस्सगुणत्वेन चिन्तिताया बहिश्चक्रे स्थापनाय स्थूलविशेषं निर्द्दिष्टुं दशमीमृचमाह—

**त्रिविष्टपं त्रिमुखं विश्वमातुर्नवरेखाःस्वरमध्यं तदीले।**

**बृहत्तिथीर्दशपञ्चादिनित्या सा षोड़शी पुरमध्यं बिभर्त्ति ॥१०॥**

रेखापदोत्तरं षोड़शस्य विसर्गस्वरस्य प्रश्लेषः। नवरेखासु नवयोनिघटितासु 'अः' इति स्वरस्थानीयो मध्योऽस्य तद्। यद्वा नवसंख्या रेखा यस्य तन्नवरेखं संहारचक्रं तस्य अःस्वरोपलक्षितं स्थानं मध्यं यस्य तद्। 'अः' इत्याकार एव स्वरो यस्मिंस्तद् अःस्वरमिति वा विग्रहः। तादृशं **त्रिमुखं** त्रिकोणं मध्यत्रिकोणमिति यावत्। तद् **विश्वमातुस्त्रिपुरसुन्दर्य्यास्त्रिविष्टपं** निवासस्थानं पूजास्थानमिति यावत्। स्वर्गस्य देवतावासभूतत्वेन वाचकपदेनात्र स्थाननिर्द्देशः। **तदीले** इति स्तोतुर्वाक्यम्। 'द्वयोश्चास्य स्वरयोर्मध्यमेत्य सम्पद्यते स डकारो लकारः' इति प्रातिशाख्यविधितो डकारस्य लकारः सञ्जातः। इयमेवोपनिषदाथर्व्वणिकैरपि पठयते, तत्पक्षे न दुःस्पृष्टादेश इति व्यवस्था। अःस्वरस्य मध्यमत्वोक्त्यैवेतरेषां पञ्चदशस्वराणां रेखात्रये बिन्दुमभितः 'समं स्याद्' इति न्यायेन पञ्च पञ्चधा विभज्यावस्थानं ध्वनितम्। तत्त्रिकोणं बृहद् विभावितं सद्दशपञ्च तिथीः दशपञ्चतिथिदेवताका **नित्याः** कामेश्वर्य्यादिचित्रान्ता बिभर्त्ति। दक्षिणोर्द्ध्वोत्तररेखासु पञ्च पञ्च नित्याः पूजनीया इति भावः। तदुपबृंहितं ज्ञानार्णवे—

विभाव्य च महत्त्र्यस्रमग्रदक्षोत्तरक्रमात्।
रेखासु विलिखेत्पश्चात् पञ्च पञ्च क्रमेण ह ॥
अकाराद्यानुकारान्तान्दक्षिणायां विचिन्तयेत्।
ततश्च पूर्व्वरेखायां दीर्घकर्णादिपञ्चकम् ॥
विलिख्योत्तररेखायां शक्त्यादि विलिखेत्ततः।
अनुस्वारान्तं मध्ये च विसर्गं षोड़शीं यजेत् ॥ इति।

चन्द्रस्य कला वृद्धिक्षयशालिन्यः पञ्चदश, ता एव हि तिथयः,
दर्शाद्याः पूर्णिमान्ताश्च कलाः पञ्चदशैव तु।

इत्यादिना तन्त्रे निर्द्दिष्टः, 'दर्शा दृष्टा दर्शता' (तै० ब्रा० ३, १०, १) इत्यादिना तैत्तिरीयैराम्नाताश्च। एतासां कारणभूता वृद्धिक्षयशून्या सदाख्या षोड़शी कला, सा च पञ्चदशानां नित्यानां कारणत्वादादिनित्योच्यते। **सा** पूर्वं वर्णिता त्रिपुरसुन्दरी आदित्यस्वरूपा सती पुरस्य श्रीचक्रस्य मध्यं विसर्गस्वरस्थानं बिभर्त्ति

**द्वा मण्डला द्वा स्तना बिम्बमेकं मुखं चाधस्त्रीणि गुह्य सदनानि ।**
**कामीं कलां काम्यरूपां विदित्वा नरो जायते कामरूपश्च काम्यः॥ ११**

---

अध्यास्ते प्रकाशविमर्शरूपाकारहकारव्यञ्जकत्वात् षोड़शस्वरस्य तदात्मकताया युक्तत्वाद् इति द्रष्टव्यम् ॥ १० ॥

प्रसङ्गात्कामं कामकलाध्यानं बहिर्यागाश्रितमुपदेष्टुमेकादशीमृचमाह—

**द्वा मण्डला द्वा स्तना बिम्बमेकं मुखं चाधस्त्रीणि गुह्य सदनानि ।**
**कामीं कलां काम्यरूपां विदित्वा नरो जायते कामरूपश्च काम्यः॥ ११**

द्वौ मण्डलौ, द्वौ स्तनौ, एकं बिम्बं मुखं त्रीणि सदनानि भूगृहाणि गुह्य हकारार्द्ध-रूपा । यद्यपि बिम्बोऽस्त्री मण्डलं त्रिष्विति कोशेन बिम्बपदस्यापि मण्डलवाचकत्वेन चतुर्थ्यामृचि वर्णितानां त्रयाणां मण्डलानामिवैष विभागस्तत्रापि वह्निसूर्य्य-मण्डलाविव स्तनौ बिम्बपदस्वारस्यात्, पाठक्रमात्तदधस्तनमिन्दुबिम्बमेव मुखम्, अधःपदस्वारस्यात्, तदधस्तनमेव भूपुरं हकारार्द्धमिति स्पष्टं प्रतीयते, सन्ति व्यत्यस्तान्यपि कामकलारूपाणि बहुविधानि तन्त्रेषु तत्र तत्र निर्दिष्टानि, तथाऽपि भगवत्पादः—

'मुखं बिन्दुं कृत्वा कुचयुगमधस्तस्य तदधो, हकारार्द्धं ध्यायेत्'

इति उपबृंहणादार्थक्रमेण पाठक्रमबाधात् । बिम्बपदं बिन्दुपरं[1] सद् बिन्द्वादि-मन्वस्रान्तचक्रगणपरम् ।

'मण्डलत्रय[2]रूपन्तु चक्रशक्त्यानलात्मकम्'

इति सुन्दरीश्लोके मण्डलपदस्य दशारादि[3]चक्रपरत्वेनापि व्याख्यानदर्शनात्[4] । बिन्द्वादिमण्डलानां षण्णामेकावयवत्वेन विभावनायैकमिति पदम् । द्वामण्डलेति अष्टदलषोड़शदलचक्रद्वयपरमिति योज्यम् । इदमवयवत्रयकथनं सर्वावयवोपलक्षणम् । वस्तुतः शरीरेऽपि त्रय एवावयवाः शीर्षादिघण्टिकान्तः कण्ठादिस्तनान्तो हृदयादिसीवन्यन्तश्च । केशपाणिपादन्तु तत्तच्छाखा इति । एवं सर्व्वचक्रात्मना परिणतां **कामीं** कामेश्वरात्मकमन्मथसम्बन्धिनीं **कलां** चित्कलां **काम्यरूपां** कमनीयस्वरूपां विदित्वा ध्यात्वा । चिकित्वेति शाखान्तरे पाठः । **नर** उपासकः **कामरूपो** मन्मथसुन्दरस्सद्यस्सकलवनिताक्षोभकरो जायते । अत्यल्पमिदमुच्यत

---

१ युक्तं सदिति पाठः । २ त्रययुक्तमिति पाठः । ३ दशारापि चेति पाठः । ४ व्याख्यासङ्गादिति पाठः ।

**परिस्रुतं झषमाद्यं पलं च भक्तानि योनीः सुपरिष्कृतानि।**
**निवेदयन्देवतायै महत्यै स्वात्मीकृत्य सुकृती सिद्धिमेति ॥ १२ ॥**

---

इत्याह **काम्य** इति विशेषणश्रवणात्त्रिभुवनान्तर्वर्त्तिसकलजनैरभिलषणीयरूपश्च भवति। तदुक्तं भगवत्पादैः—

'ध्यायेद्यो हरमहिषि ते मन्मथकलाम्।
स सद्यः संक्षोभं नयति वनिता इत्यति लघु
त्रिलोकीमप्याशु भ्रमयति रवीन्दुस्तनयुगाम्' ॥ इति।

कामरूपत्वकाम्यत्वकामः कामकलां ध्यायेदिति गुणफलसम्बन्धविधिः। अत्र फलार्थतया विधेयस्य ध्यानस्य स्वतःक्रियारूपस्याश्रयान्तरानपेक्षतया श्येनक्रत्वादेः सौमिकाङ्गसंवलितत्वस्येव बहिर्यागाङ्गसंवलितत्वस्याप्यभावेन बहिर्यागाद्बहिरप्य-नुष्ठानात् फलमिति तु भगवत्पादाशयः।

बिन्दुं संकल्प्य वक्त्रं तु तदधःस्थं कुचद्वयम्।
तदधः सपरार्द्धं तु चिन्तयेत्तदधोमुखम् ॥

इति नित्याषोडशिकार्णवे। क्रतुप्रकरणस्थविधिना ऽस्य ध्यानस्य क्रत्वर्थत्वमपि स्मर्यत इति चेत्, किं तावता?। अन्नाद्यकामनाफलकाविष्टेरिव फलार्थिना बहिः-प्रयोगस्याप्यक्षतत्वात्। अत एव भगवत्स्मरणमुपक्रम्योक्तं भक्तिसूत्रे 'बहिरन्तस्त-मुभयमवेष्टिवत्सर्वमिति' ॥ ११ ॥

बहिर्यागद्रव्याणि बहिर्यागं द्रव्यप्रतिपत्तिं च विधातुं द्वादशीमृचमाह—

**परिस्रुतं झषमाद्यं पलं च भक्तानि योनीः सुपरिष्कृतानि।**
**निवेदयन्देवतायै महत्यै स्वात्मीकृत्य सुकृती सिद्धिमेति ॥ १२ ॥**

झषो मत्स्यः। पलं मांसम्। झषस्याद्यं परिस्रुतः प्रथमस्योत्तरं द्वितीय-मित्यर्थः। तेन झषस्तृतीयः। भक्तानि वटकचणकादिमुद्गाद्यात्मकानि नाना-विधान्यन्नानि[1]। चतुर्थं योनिपदं कुण्डगोलोद्भवोपलक्षणं तत् पञ्चमम्। योनी-रिति बहुवचनं तु ब्राह्मणक्षत्रियादिकतिपयजातिभेदाभिप्रायम्। तदुपबृंहणं कलाष्टकादिपदेन तन्त्रेषु द्रष्टव्यम्। चकारः पञ्चानां समुच्चयपरः। पलस्य झषोत्तरं पठितस्यापि झषात् पूर्वमाद्यपदेन निवेशान् मकाराणां क्रमो विव-क्षितो ध्वन्यते। तेन मुख्यालाभे प्रतिनिधिभिरर्चनस्य न्यायेन मपञ्चकालाभेऽ

---

१। आद्यमत्तुमर्हं तेन गजव्याघ्रादीनां मांसानामन्येषां स्मृतिविरुद्धानां निरासः इति केचित्।

**सृण्येव सितया विश्वचर्षणिः पाशेन प्रतिबध्नात्यभीकान् ।
इषुभिः पञ्चभिर्धनुषा च विध्यत्यादिशक्तिररुणा विश्वजन्या ॥१३॥**

---

पि 'नित्यक्रमं प्रत्यवमर्मृष्टिः' इति कल्पसूत्रेण च सिद्धत्वे ऽपि पूर्वपूर्वालाभे सति नोत्तरोत्तरस्य मुख्यस्य लाभेऽपि ग्रहणमिति द्योतितम् । प्रथममात्रालाभेऽपि चतुर्थस्य नैवेद्यार्थमावश्यकत्वात्तावन्मात्रग्रहणं संप्रदायलभ्यम् । आज्यमिति शाखान्तरीयपाठे तु घृतमेवार्थः, तत्र पक्वमित्यर्थेन तत् काकाचिगोलकन्यायेनोभयोर्विशेषणम् । अजसम्बन्धीति व्याख्या तु न युक्ता । तन्त्रे विकारार्थकस्य दर्शनात् । सूत्रोक्तानां पञ्चत्वादिना परिसंख्यापत्तेश्च । परदेवतातर्पणमात्रपर्याप्तमात्रस्य लाभे ऽपि न प्रतिनिधिना यागः । बहिर्यागे स्वात्मीकारस्य प्रतिपत्तित्वेन तल्लोपेऽपि बाधकाभावादित्यादिकन्तु षाष्ठन्यायसिद्धमूहनीयम् । **सुपरिष्कृतानि** दृष्टादृष्टसंस्कारैः संस्कृतानि । ते च पाकादिरूपा लौकिकाः, शापमोचनादिरूपा वैदिकाश्च बहवस्तन्त्रेषु प्रसिद्धाः । 'बह्वल्पं वा स्वगृह्योक्तम्' इति न्यायेन कल्पसूत्रोक्तमात्रा वा । **महत्यै देवतायै** महादेव्यै **निवेदयन्** यजन् **सुकृती** बहिर्यागकर्ता तानि **स्वात्मीकृत्य** स्वयमपि भक्षयित्वा **सिद्धिं** यागफल**मेति** प्राप्नोति । परस्परसमुच्चितप्रथमादिमपञ्चकवता यागेन महादेवीदेवताकेनेष्टसिद्धिं भावयेदिति विधिपर्यवसानादिप्रकारोऽन्तर्यागविधिवदेव द्रष्टव्यः ॥ १२ ॥

देवतायाः सगुणं ध्यानं क्रत्वङ्गमुपदेष्टुं त्रयोदशीमृचमाह—

**सृण्येव सितया विश्वचर्षणिः पाशेन प्रतिबध्नात्यभीकान् ।
इषुभिः पञ्चभिर्धनुषा च विध्यत्यादिशक्तिररुणा विश्वजन्या ॥१३॥**

**सृण्येव सितयेति** इत्थंभूतलक्षणे तृतीया । **सितया** श्वेतया रजतमय्या सशयोरभेदान्निशितया तीक्ष्णधारया वा **सृण्या**ऽङ्कुशेनेवोपलक्षिता **विश्वजन्या** विश्वं जन्यं यस्याः सा विश्वजगज्जननी **अरुणा** लौहित्यवती **आदिशक्ति**-र्महात्रिपुरसुन्दरी **विश्वचर्षणिः** प्राणिमात्रस्य शुभाशुभकर्मद्रष्ट्री सती **अभीकान्** कामुकान् तृष्णया लौल्येनेह मार्गे प्रवर्तमानान् भ्रष्टान् **प्रतिबध्नाति** तान् बध्वा **धनुषा पञ्चभिरिषुभि**र्बाणै**र्विध्यति च** ।

**भगः शक्तिर्भगवान् काम ईश उभा दाताराविह सौभगानाम् ।**
**समप्रधानौ समसत्त्वौ समोतयोः समशक्तिरजरा विश्वयोनिः ॥१४॥**

---

अधः पातयतीति यावत् । तृष्णाहीनान् वैधधिया प्रवर्तमानानूर्ध्वं नयतीति तु विधिसिद्धमेवेति पुनर्नोक्तम् । तदुक्तम्—

विधिबुद्ध्यैव सेवेत तृष्णया चेत्स पातकी ।
यैरेव पतनं द्रव्यैर्मुक्तिस्तैरेव चोदिता ॥
अभोकस्यानभोकस्येत्येवमेते व्यवस्थिताः ।

इत्यादि । सृण्येवेति द्विविधा सृणिर्भवति भर्ता च हन्ता चेति तु यास्कः । इव शब्दः सर्वत्रान्वितः सन् सगुणरूपस्य भक्तानुग्रहार्थं कल्पितत्वेन निर्गुणरूपस्यैव पारमार्थिकत्वं व्यञ्जयति ॥ १३ ॥

सगुणस्य कल्पितत्वादेव स्त्रीपुंसरूपयोः समप्राधान्यमुपदेष्टुं चतुर्दशीमृचमाह—

**भगः शक्तिर्भगवान् काम ईश उभा दाताराविह सौभगानाम् ।**
**समप्रधानौ समसत्त्वौ समोतयोः समशक्तिरजरा विश्वयोनिः ॥१४**

भगोऽपि ईशपर्यायः ।

ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
ज्ञानविज्ञानयोश्चैव षण्णां भग इतीरणा ॥

इत्यादिस्मृतिष्वीशस्य शरीरघटको यावान् धर्मराशिः स सर्वोऽपि भगपदेनेह निर्दिष्टः । तादृशो धर्मसमूह एव शक्तिरित्युच्यते । उपास्यत्वेन वर्णितायाः स्त्रीरूपाया देवताया इदं स्वरूपम् । तदुक्तं नागानन्दसूत्रे प्रकाशात्मनो ब्रह्मणः स्वभावात्मकविमर्शं प्रक्रम्य 'एष एव विमर्शश्चितिश्चैतन्यमात्मा स्वरसोदिता परा वाक् स्वातन्त्र्यम् परमात्मोन्मुखत्वमैश्वर्यं सतत्त्वं सत्ता स्फुरत्ता सारो मातृका मालिनी हृदयमूर्मिः स्वसंवित्स्पन्द इत्यादिशब्दैरागमेषूद्घोष्यते' इति । एतेषां धर्मविशेषाणां विवरणं तद्भाष्य एव द्रष्टव्यम् । **भगवान्** तादृशधर्मविशिष्ट एव **काम ईशः** कामेश्वरः इदमेवोपास्यदेवतायाः पुमात्मकं रूपम् । **इहो**-पासनायां **सौभगानां** धर्मार्थकामरूपाणां विविधफलानां **दातारावु**भावपि

**परिस्रुता हविषा पावितेन प्र संकोचे गलिते वै मनस्तः ।**
**सर्वः सर्वस्य जगतो विधाता धर्ता हर्ता विश्वरूपत्वमेति ॥ १५ ॥**

---

एकस्या एव देवताया द्वेधाऽपि सगुणध्याने त्रिवर्गसिद्धिरित्यर्थः । **समप्रधानौ समसत्त्वौ** । सत्त्वशब्दो गुणपरस्तेन परस्परं गुणगुणिभावापन्नावित्यर्थः । कामेश्वर्याः कामेश्वराङ्कनिलयत्वेन ध्याने शिव आधारत्वात् गुणः शक्तिः प्रधानं शिवस्याधाम्बिकासमायुक्तत्वेन ध्याने करशीर्षाद्यवयवविशेषरूपत्वाच्छक्तिर्गुणः शिव एव प्रधानमिति भावः । एवमभिमतफलदानसामर्थ्यस्यान्योन्यगुणप्रधानभावस्य साम्येऽपि जगत्कर्तृत्वांशः शक्तिनिष्ठ एव । तेन स्त्रीरूपध्यानेनैव शीघ्रं फलसिद्धिरिति ध्वनयन्नाह—**समोतयोरिति** । सम्यक् परस्पराभेदेनोतयोर्मिलितयोरर्द्धनारीश्वररूपयोः शिवशक्त्योर्मध्ये **समशक्तिः** सर्वशक्तिर्निखिलधर्मसमूहात्मिका देव्येव **विश्वयोनिर्जगत्कर्त्री** । तथाच शक्तिसूत्रम्—'चितिः स्वतन्त्रा विश्वसिद्धिहेतुरिति । समशब्द 'उरुष्या णो अघायतः समस्माद्' इत्यादौ प्रसिद्धः सर्वपर्यायः । **अजरेति** विश्वयोनित्वांशे विशेषणम् । जगत्कर्तृत्वं प्रत्यक्षादिप्रमाणसिद्धत्वेन शङ्काकलंकरहितत्वादृतमित्यर्थः । तदुक्तं भागवते—

शक्तिः करोति ब्रह्माण्डं सा वै पालयते ऽखिलम् ।
इच्छया संहरत्येषा जगदेतच्चराचरम् ॥
न विष्णुर्न हरो नेन्द्रो न ब्रह्मा न च पावकः ।
नार्को न वरुणः शक्ताः स्वे स्वे कार्ये कथञ्चन ॥
तया युक्ता हि कुर्वन्ति स्वानि कार्याणि ते सुराः ।
कारणं सर्वकार्येषु प्रत्यक्षेणावगम्यते ॥

इति । अन्यत्रापि—

शिवोऽपि शवतां याति कुण्डलिन्या विवर्जितः ।
शक्तिहीनो ऽपि यः कश्चिदसमर्थः स्मृतो बुधैः ॥

इत्यादि । विशेषः सेतुबन्धे द्रष्टव्यः । तेन शिवस्य विद्यमानमपि फलदातृत्वादिकं शक्त्यधीनत्वाद्विलम्बितं शक्तेस्तु निरपेक्षत्वादविलम्बितमिति शीघ्रप्रसिद्धिकामैः स्त्रीरूपैव देवता ध्यातुं युक्तेति भावः ॥ १४ ॥

एवं सगुणध्यानमुक्त्वा निर्गुणध्याने वक्तव्यांशाभावात्तज्जन्यफलं तज्जननप्रणालिकां चोपदेष्टुं पञ्चदशीमृचमाह—

**परिस्रुता हविषा पावितेन प्र संकोचे गलिते वै मनस्तः ।**
**सर्वः सर्वस्य जगतो विधाता धर्ता हर्ता विश्वरूपत्वमेति ॥ १५ ॥**

**परिस्रुतेति ।** कर्ममार्गज्ञानमार्गभक्तिमार्गेषु तच्छास्त्रप्रवर्तकैः प्रणालिका नानाविधाः परस्परविलक्षणा उक्ताः । ताः सर्वा अपि दुःसाध्याश्चिरकालफलप्रदा इति तु तच्छास्त्रविदां स्पष्टमेव । अत्र तु द्रव्यश्लोकारैरावर्तमानैरुल्लासपरंपरैव प्रणालिका । तत्र प्रौढोल्लासपर्यन्तं समयाचारक्तता धर्मास्तदन्तोल्लासे याथाकाम्यं चरमोल्लासे ब्रह्मस्वरूपतेति । तथाच कल्पसूत्रम्—'आरम्भतरुणयौवनप्रौढतदन्तो-न्मन्यनवस्थोल्लासेषु प्रौढान्तं समयाचारः, ततः परं यथाकामीति' । उल्लास-सप्तकलक्षणानि कुलार्णवादिषु द्रष्टव्यानि । यद्यपि प्रतिदिनं ब्रह्मस्वरूपतावाप्ति-र्जायत एव, तदानीं मनसो विलीनत्वात्, तथाऽप्यविद्यापरिणामविशेषरूपया निद्रया संवलितत्वान्न सा पुरुषार्थः । निद्राराहित्येन तादृशी दशा तु पुरुषार्थ एव यां ज्ञानभूमिकासु सप्तमीं मन्यन्ते ज्ञानिनः । यां च निर्विकल्पकसम्बधित्वेन व्यवहरन्तो ऽनुभवन्ति योगिनः । सैव च दशा उन्मनोत्तरानवस्थारूपोल्लासे ऽपि योगिभिरनुभूयते । तदुक्तम्—

आनन्दं ब्रह्मणो रूपं तच्च देहे व्यवस्थितम् ।
तस्याभिव्यञ्जकं द्रव्यं योगिभिस्तेन पीयते ॥ इति ।

कल्पसूत्रे तु तस्याभिव्यञ्जकाः पञ्च मकारा इत्युक्तम् । परन्तु तदेव द्रव्यमय-ज्ञाङ्गमपवित्रं चेत् पीतं तदा पुरुषार्थनिषेधप्रवृत्त्या पापेन प्रतिबन्धान्न तां दशां मुत्पादयितुं क्षमम् । मन्त्रैः पावितं हवीरूपमेव तु समाधिदशामुत्पादयति । तदुक्तं समयाचारस्मृतौ—

असंस्कृतं पशोः पानं कलहोद्वेगपापकृत् ।
मन्त्रपूजाविहीनं यत् पशुपानं तदेव हि ॥
पशुपानविधौ पीत्वा वीरो ऽपि नरकं व्रजेत् ।
संस्कृतं बोधजनकं प्रायश्चित्तं च शुद्धिकृत् ॥
मन्त्राणां स्फुरणं तेन महापातकनाशनम् ।
आयुः श्रीः कान्तिसौभाग्यं ज्ञानं संस्कृतपानतः ॥
अष्टैश्वर्यं खेचरत्वं पतनं विधिवर्जितम् ।
सौत्रामण्यां कुलाचारे मदिरां ब्राह्मणः पिबेत् ॥
अन्यत्र ब्राह्मणः पीत्वा प्रायश्चित्तं समाचरेत् ।

इत्यादि। परन्तु—

परं प्राणाः प्रगच्छन्तु ब्राह्मणो नार्पयेत्सुराम्।
ब्राह्मणो मदिरां दत्त्वा ब्राह्मण्यादेव हीयते॥

इत्यादिशक्तिसंगमतन्त्रराजादिवचनैर्निषिद्धत्वादिह धर्मपाशनिरसनोपायः सत्संप्रदायादेवावगन्तव्यः। व्यवस्थाप्रकाराश्च कौलोपनिषद्भाष्ये ऽस्माभिः प्रदर्शिताः। ततश्च तदधिकारिणां तादृशैरुल्लासैरन्तःकरणावच्छिन्नस्य जीवात्मनोऽन्तःकरणोपाधिकृतसंकोचापनये सति ब्रह्मभावे सति किमवशिष्यते। नच द्रव्योल्लासस्यागमापायित्वेन न तावतैव कृतार्थतेति वाच्यम्। अस्य पर्यनुयोगस्य समाधावपि तुल्यत्वात्। अथ तत्र पवननियमनादिभिरुपायैः पुनः पुनः समाधिप्रवेशेन चिराभ्यासपाटवेन कतिपयदिवसोत्तरं विनाऽपि पवननिरोधं सार्वकालिकः समाधिरुत्पद्यते, समुद्रे नौकामारुह्य गच्छतां तत्कल्लोलैः सुचिरमान्दोलितवतां नौकावरोहणेऽप्यान्दोलनानुवृत्तिदर्शनादिति चेत्, तुल्यं प्रकृते ऽपि, संस्कृततद्द्रव्यपानजन्योन्मन्यवस्थाभ्यासपाटवेन विनाऽपि द्रव्यं कतिपयदिवसैः तादृशदशाया अकृत्रिमायाः सिद्धेः।

अक्षरार्थस्तु **पावितेन** मन्त्रसंस्कारसंस्कृतेन **हविषा** देवीपूजाशेषभूतेन **परिस्रुता** पीयमानेन **मनसः** अन्तःकरणाज्जाते **संकोचे** आत्मनः परिच्छेदे **प्रगलिते** निर्व्युत्थानाद् विलीने सति उन्मन्युल्लासोत्तरानवस्थायामिति यावत्। **वै** निश्चयेन **सर्वः** सर्वात्मको भवति। तेन स्वात्मैकविषयकनिर्विकल्पकवृत्तिजनको मद एवान्तर्यागविधायकवाक्ये धात्वर्थ इत्युपसंहृतं भवति। अनेनैवाशयेन तन्त्रे मत्तस्य बहुविधता प्रतिपाद्यते—

रमन्ते कामुका मत्ता मत्तः कुप्यति कोपनः।
गायन्ति गायका मत्ता मत्ता ध्यायन्ति कोपनः॥

इति। तेन योगिविशेषो ऽप्येतत्सहायत्वेनाचिह्नः। सर्वात्मकत्वमेव विवृणोति **सर्वस्य जगतो विधाता** ब्रह्मा **भर्ता** विष्णुर्हर्ता रुद्रः स एव। किं बहुना दासदाशकितवादिप्राणिमात्ररूपः स एव भवतीत्याह—**विश्वरूपत्वमेति।** शरीरपातस्तु प्रारब्धवशाद् यदा कदाऽपि यत्र क्वापि भवतु न तावता ऽस्य कोऽपि विशेषः कृतकृत्यत्वादिति भावः। उक्तं च कल्पसूत्रे—'इत्थं विदित्वा विधिवदनुष्ठितवतः कुलनिष्ठस्य सर्वतः कृतकृत्यता शरीरत्यागे श्वपचगृहकाश्योर्नान्तरं स जीवन्मुक्त इति॥ १५॥

**इयं महोपनिषत्त्रिपुराया यामक्षरं परमे गोर्भिरीट्टे ।**
**एषर्ग्यजुः परमेतच्च सामेवायमथर्वेयमन्या च विद्योऽम् ॥१६॥**

**एवं वेदेत्युपनिषत् ॥**

---

इत्थं त्रैपुरसिद्धान्तं कथितमुपसंहरन्नेतदध्ययनादपि फलमस्तीत्युपदेष्टुं षोडशीं यजुरन्तामृचमाह—

**इयं महोपनिषत्त्रिपुराया यामक्षरं परमे गोर्भिरीट्टे ।**
**एषर्ग्यजुः परमेतच्च सामेवायमथर्वेयमन्या च विद्योऽम् ॥१६॥**

**एवं वेदेत्युपनिषत् ।**

**इयं महोपनिषदिति ।** उपबृंहितं चैतत्कल्पसूत्रकृता भगवता श्रीपरशुरामेण-'य इमां दशमखण्डीं महोपनिषदं महात्रैपुरसिद्धान्तसर्वस्वभूतामधीते सर्वेषु यज्ञेषु यष्टा भवति यं यं क्रतुमधीते तेन तेनास्य क्रतुनेष्टं भवतीति हि श्रूयत इत्युपनिषदिति शिवम्'इति। एतेनास्यां महोपनिषदि ये ऽकथिता अपेक्षिता अर्थाः कल्पसूत्राज्ज्ञाह्याः। कल्पसूत्राधिकरणे शाखाभेदेन विप्रकीर्णानामङ्गानामुपसंहारासमर्थान् प्रत्येव प्रयोगशास्त्रस्य प्रामाण्यसमर्थनादिति सिध्यति। अक्षरार्थस्तु **इयं** त्रिपुराया **महोपनिषत्** रहस्यप्रतिपादकवाक्यसन्दर्भरूपा पठनीयेति शेषः। तत्र हेतुमाह—**यामित्यादिना। परममक्षरं** ब्रह्म कर्तृ यामुपनिषदं **गीर्भिः** स्तुतिवाग्भि**रीट्टे** स्तौति। ईड स्तुतावित्यस्य रूपम्। परमे इति सोः शे आदेशः छान्दसः। यांब्रह्मेतिपदयोर्व्यत्यासेन प्रथमाद्वितीयान्तत्वस्वीकारेणोपनिषत्कर्तृकब्रह्मकर्मकस्तुतिर्वा। परमेश्वरेणापि स्तुतत्वात्तत्स्तावकत्वाच्चेत्यर्थः। हृल्लेखाक्षरं यां त्रिपुरां स्तौतीति वा। परम् ए इतिच्छेदः। एकाररूपमक्षरमिति वा।

यदेकादशमाधारं बीजं कोणत्रयोद्भवम्।
ब्रह्माण्डादिकटाहान्तं जगदद्यापि दृश्यते॥

इतिवचनात्। एकारे ऽपि अ + ई इतिच्छेदो वा। "अकारो वै सर्वा वाक्"। 'यदीं शृणोत्यलकं शृणोति" इति श्रुतेः। चरम ओंकारो वा

अक्षरे विशेषत्वेनान्वेति। स गीर्भिरकारोकारमकारैः परमो ऽखण्डोऽपि यां स्तौतीत्यर्थः। "समस्तं व्यस्तं वा शरणद गृणात्योमिति पदम्" इति शिवरहस्ये स्मरणात्। "स्वाध्यायो ऽध्येतव्य" इति विधिविहितविविधाध्ययनान्यप्येतदध्ययनेनैव सिध्यन्तीत्याह—एषेति। ऋगादिशब्दा वेदपरा न त्वेकैकमन्त्रपरा अथर्वादिप्रायपाठात्। एषाएतदयमितिशब्दा ऋग्यजुराथर्वणां विशेषत्वाभिप्रायेण साम्नो ध्वनिरूपत्वेनानक्षरत्वादिवेतिपदेन अक्षरेषु तत्तुल्यफलकत्वद्योतनम्। अष्टादशविद्यासु चतुर्णामुपादानादन्यपदेन उपदेशाद्याश्चतुर्दश गृह्यन्ते। सर्वस्वरूपेयमुपनिषदित्यर्थः। प्रणवस्वरूपाऽप्येषैवेत्याह—ओमिति। 'ओमाङो-श्च'इति पररूपम्। तेन यतिभिरप्यध्येतव्येति भावः। इयमुपनिषदेतादृशीत्येवं यो ह्येतस्या महिमा तं श्रुतिरपि वक्तुमसमर्था। तस्या ब्रह्मैकरूपत्वात् तत्र वाचामप्रवृत्तेरित्याशयेन श्रुत्या मौनमाश्रितम्। इत्युपनिषद् समाप्तेत्यर्थः। इतो ऽधिकस्य रहस्यस्य वक्तव्यांशस्याभावाद् इति भावः॥

इति श्रीभास्कररायेणाग्निचिता त्रिपुरामहोपनिषदो ऽर्थाः प्रकटयितुमयोग्या अपि विदुषां तोषाय कतिपये कथिताः।

इति भास्कररायकृतं त्रिपुरामहोपनिषद्भाष्यं सम्पूर्णम्॥

॥ शुभम् ॥

# सुन्दराचार्यशिष्याप्पय्यदीक्षितकृतं महोपनिषद्भाष्यम् ।

श्रीरस्तु । श्रीरामकृष्णाभ्यां नमः । त्रिपुरोपनिषद्भाष्यम् ।

ब्राह्मणानां तु या पारायणमात्रोपयोगिनी ।
त्रिपुरोपनिषत्सेयं सम्यग्व्याख्यास्यतेऽधुना ॥ १ ॥

अस्यास्त्रिपुरोपनिषदस्सकामक्षत्रियकर्तृककौलशाक्तमार्गानुसारिबाह्याराधनस्यैव प्राधान्येन वर्णनाद् ब्राह्मणकर्तृकपारायणमात्रोपयुक्तता स्यात् । यथा च वेदोक्ताश्वमेधप्रकरणानां ब्राह्मणपारायणमात्रयोग्यता ऽस्ति तद्वत् । कुतः ? सुरापानादीनामत्र विहितत्वात् । 'ब्राह्मणो न सुरां पिबेद्' । 'न कलञ्जं भक्षयेद्' इति सुरापानादेस्सुतरां प्रतिषिद्धत्वाच्च । क्षत्रियस्य तु देवीप्रसादबुद्ध्या तत्पानपूर्वकयुद्धादिप्रवृत्त्यौचित्यान्न क्वचिदपि तत्प्रतिषेधः स्यात् । गुरुज्ञानवासिष्ठोपासनाकाण्डे चेदृशी बाह्यशक्तिपूजा तन्त्रानुसारिणी सर्वथा ब्राह्मणानर्हा क्षत्रियमात्रार्हेति च बहुशो ऽभिहिता ऽस्ति । नच क्षत्रिया इव सुरापानादिभिरनिन्द्या इतरवर्णिनः संकरा वा ऽस्यामुपासनायामर्हन्तीति वाच्यम् । तेषां वेदाधिकारस्य सर्वत्र प्रतिषिद्धत्वात् । नापि ब्राह्मणानां सौत्रामण्यां वाजपेयपौण्डरीकादिषु च यागेषु मधुमांसस्त्रीविषयभोगादिविधानवदत्रापि अधिकारो ऽनवद्यः स्यादिति शङ्क्यम् । यद्घ्राणभक्ष इतिभागवते तत्तदाघ्राणमात्रस्य विहितत्वेन तत्तद्भक्षणस्याविहितत्वात् । नच सद्यो मदाभावेन कर्मलोपाभावे ऽप्याघ्राणजनितं पापं तेषां भवतीति शङ्क्यम् । श्रुतिपुराणविहितत्वधिया क्रियमाणत्वेन पापाप्रसक्तेः । निष्कामस्य तु इदमुपासनं तानि कर्माणि च सर्वथाऽननुष्ठेयान्येव । 'आसु निवृत्तिरिष्टा'इति भागवतावधारितत्वात् । नन्विह परिस्रुतादीनि महत्यै देवतायै निवेदयन्सुकृत्येव सिद्धिमितीत्युक्तं नतु तत्पानादिकर्तेति । नायं दोषः । स्वोपास्यदेवतायै निवेदितानां सर्वेषां पदार्थानां यथोपयोगमुपासकैः प्रसादबुद्ध्या परिग्राह्यत्वोपपत्तेः । तथा लोकप्रसिद्धेश्च । यद्वा 'परिस्रुता तर्पयन्तःस्वपीठमि'त्यत्र स्वपीठं कामपीठं मूलाधारात्मकं प्रसिद्धम् । तस्य तर्पणं पानेनैव भवितुमर्हति । नच स्वात्मीकृत्येत्येष शब्द उपासकस्य स्वोपभोगार्थको भवितुमर्हति । स्वात्मार्थं करोतीतिकृत् तस्यै देवतायै इतिदेवताविशेषणत्वात् । ननु भगवान् विष्णुः कामेशः परशिवस्तयोः शक्तिरजरा विश्वमायेत्यर्थः । सा विश्वमातेत्यादिविद्येति

चाभिधीयमानत्वात्तुष्टुवांसस्तुवन्तो ऽमृतत्वं भजन्त इति मोक्षप्राप्त्यभिधानाच्च न केवलं काव्यप्रयोजनत्वमस्या इति वाच्यमिति चेन्न। परिस्रुता हविषा पावितेनेत्युक्त्या पूर्ववत्सकामोपास्याया एव देवताया अभिधीयमानत्वान्न मोक्षप्रयोजनता वाच्या। यद्वा मोक्षप्रयोजनवर्जितायाः कस्याश्चिदप्युपनिषदस्सत्त्वानुपपत्तेरियंचोपनिषदुपसंहारवाक्यैः सगुणनिर्गुणोभयब्रह्मविद्यापराऽवगन्तव्या। तथाह्येषर्ग्यजुरित्यादिषु चतुर्वेदमयो सगुणब्रह्ममयो अन्याच विद्येति निर्गुणब्रह्ममयो चाभिधीयते। तस्मात्क्रमक्रमेण निर्गुणब्रह्मपरतामवगम्य शुद्धाचाराः सद्ब्राह्मणाः श्रुत्यन्तरोक्तप्रकारकध्यानसमाधियोग्योपायाः संसारबन्धेभ्यो मुक्तिं यान्तु। नत्वत्रोक्तप्रकारकपरिस्रुतादिनिवेदनानि स्वप्नेऽप्याचरन्तु।

इति सुन्दरेश्वरतातपादशिष्याप्पय्यदीक्षिताचार्यविरचितोपनिषद्भाष्ये त्रिपुरोपनिषद्भाष्यम्।

॥ समाप्तम् ओ३म् ॥

श्रीः ।

# भावनोपनिषत् ।

स्वाविद्यापदतत्कार्य्यं श्रीचक्रोपरि भासुरम् ।
बिन्दुरूपशिवाकारं रामचन्द्रपदं भजे ॥*

ॐ भद्रं कर्णेभिरिति शान्तिः ।

हरिः ॐ आत्मानमखण्डमण्डलाकारमावृत्य सकलब्रह्माण्डमण्डलं स्वप्रकाशं ध्यायेत् । श्रीगुरुः सर्वकारणभूता शक्तिः ॥१॥

## भास्कररायविरचितं भावनोपनिषद्भाष्यम् ।

श्रीनाथाङ्घ्रिपरागैकोपरागादपरागधीः ।
भावनोपनिषद्भाष्यं भाषते भास्करस्सुधीः ॥

इह खलु श्रीत्रिपुरसुन्दर्याः स्थूलसूक्ष्मपररूपभेदेन त्रिविधाया उपास्तिरूपा क्रियाऽपि त्रिविधा—कायिकी वाचिकी मानसी चेति । तासां बहिर्य्यागान्तर्यागभावनारूपाणामेकैकस्यामितरयोस्संवलितत्वे ऽपि प्राधान्यप्राचुर्य्याभ्यां कायिकत्वादिव्यपदेशः । एतास्वादिमं द्वयं त्रिपुरातापिन्याद्युपनिषत्सूपदिश्य ततो ऽपि रहस्यभूतां कालचक्रान्तर्गतश्रीचक्रस्य भावनानाम्नीं तृतीयामुपास्तिमथर्वनामा ऽऽदिवेदपुरुषो योगिजनानुजिघृक्षया प्रकाशयन्नादौ सद्गुरोः परं रूपं विधत्ते—'श्रीगुरुः सर्वकारणभूता शक्तिः' इत्यादिवाक्यद्वयेन । तत्र चोपनिषदि श्रूयमाणं 'भावनापरो जीवन्मुक्तो भवति' इति वाक्यमाग्नेयादिवाक्यवद् भावनया जीवन्मुक्तिं भावयेदिति परिणतं सद् अपूर्वविधिः । आर्थभावनाकरणीभूतायाश्च भाव्यार्थोपायपररूपभावनायाः स्वर्गवदलौकिकत्वेन तत्स्वरूपनिरूपणार्थः श्रीगुरुरित्यादिस्सर्वोऽपि तद्विधेः शेषः । तेन 'यन्न दुःखेन' इत्यादिवाक्यवद् विध्येकवाक्यतया स्वार्थे प्रामाण्यमस्यावधेयम् । ताश्च भावना यद्यपि कादि-

* स्वेत्यारभ्य ध्यायेदित्यन्तः पाठः पुस्तकान्तरे ऽधिकः ।

तेन नवरन्ध्ररूपो देहः ॥ २ ॥

---

मतकौलमतभेदेन द्विलक्षणास्तन्त्रेषूपलभ्यन्ते, तथाऽपि प्रकृतोपनिषदि कादिमतानुसारेणैव वर्ण्यन्ते, 'कादिमतेनान्तश्चक्रभावनाः प्रतिपादिता, य एवं वेद' इत्युपसंहारात्। तेनास्यामेवोपनिषदि शाखाभेदेन पाठभेददर्शने ऽपि कादिमतीयतन्त्रसूत्राद्युपबृंहणानुगुणं पाठमनुसृत्येहास्माभिर्व्याख्यायते। अतएव प्रयोगविधिलेखनावसरे प्रकृतशाखायामश्रूयमाणो ऽप्यंशो ऽपेक्षितत्वान्नित्याहृदयतन्त्रराजबिन्दुसूत्रादिभ्य उपसंहृत्य वर्णयिष्यते—

श्रीगुरुः सर्वकारणभूता शक्तिः ॥ १ ॥

तेन नवरन्ध्ररूपो देहः ॥ २ ॥

इदं च वाक्यद्वयमुपबृंहितं तन्त्रराजे—

गुरुराद्या भवेच्छक्तिरसा विमर्शमयी मता।
नवत्वं तस्य देहस्य रन्ध्रत्वेनावभासते॥ इति।

अत्र आद्येति सर्वकारणभूतेत्यस्य विवरणम्, कारणस्य कार्यपूर्वभावित्वेनाद्यत्वात्। ईश्वरानुग्रहवशेन जायमानो विवेकः सर्वसंशयभेदनेन मन्त्रवीर्यप्रकाशनेन तात्त्विकपदार्थानामवकाशप्रदानाद्विमर्शपदाभिधेयः गुरुः, गुर्वभिन्नरन्ध्रवान्। तेषु श्रोत्रद्वयं वाक् च दिव्यौघः, दृग्द्वयमुपस्थंस्सिद्धौघः, [1]नासापायवो मानवौघ इति संप्रदायः। एतद्विमर्शनवकस्य मूलभूता सुषुम्नानाड्येव नवरन्ध्रसुषुम्नामूलभागे श्रोत्रादिनाडीनां मिलितत्वेन सुषुम्नावच्छिन्नचिच्छक्तेरेव तत्तन्नाडीद्वारा तत्तद्विषयावभासकत्वात्। नाडीनामवस्थानप्रकारो यथा—

---

अथ भावनोपनिषत्प्रयोगः।

अथ भावनोपनिषदा[2] मुक्तैत्र या भावनाः कथिताः।
भास्कररायो रचयति तासामेवं प्रयोगविधिम्॥

मूलेन[3] प्राणानायम्य ऋष्यादिन्यासत्रयं कृत्वा विवेकद्वत्त्यवच्छिन्नचिच्छक्तिरूपसुषुम्नात्मने श्रीगुरवे नमः इति ब्रह्मरन्ध्रं[4] स्पृष्ट्वा दक्षश्रोत्ररूपपयस्विन्यात्मने प्रकाशानन्दनाथाय नमः। वामश्रोत्ररूपशंखिन्यात्मने विमर्शानन्दनाथाय नमः। जिह्वारूपसरस्वत्यात्मने श्रीआनन्दनाथाय नमः। दक्षनेत्ररूपपूषात्मने श्रीज्ञानानन्दनाथाय नमः। वामनेत्ररूपगान्धार्यात्मने श्रीसत्या[5]नन्दनाथाय नमः। ध्वज-

---

१ इतर इति पाठः। २ निषदामिति पाठः। ३ मूलमन्त्रेणेत्यर्थः। ४ रन्ध्र इति पाठः। ५ सूर्येति पाठः।

प्रागुक्तमूलाधारस्य मध्यस्थत्र्यस्रमध्यतः ।
सुषुम्ना पृष्ठवंशाख्यवीणादण्डस्य मध्यगा ॥
मूर्द्धनि ब्रह्मरन्ध्रान्ता नासाग्राद्द्वादशाङ्गुला ।
तन्मूलात्पायुगा प्रोक्ता ऽलम्बुसाख्या तु नाडिका ॥
त्र्यस्राग्रादुत्थिता नाडी कुहूर्नाम ध्वजान्तगा ।
तद्वामदक्षपार्श्वाभ्यां द्वे विश्वोदरवारुणे ॥
जठरान्ता सर्वगा च प्रोक्ते तद्वदनन्तरे ।
हस्तिजिह्वायशस्विन्यौ पादाङ्गुष्ठान्तविस्तृते ॥
तथैवेडापिङ्गले द्वे नासारन्ध्रद्वयान्तगे ।
गान्धारी च तथा पूषा नेत्रद्वयगते क्रमात् ॥
तथैव कर्णगामिन्यौ शंखिनी च पयस्विनी ।
जिह्वाग्रगा सरस्वत्याख्यैवं नाड्यश्चतुर्दश ॥

मूलाधारे नाडीनां स्थितिक्रमो यथा—

मूलाधारे त्र्यस्रमध्ये सुषुम्नाऽलम्बुसे उभे ।
प्राक्प्रत्यगास्थिते अन्यास्त्रिकोणाग्रात्प्रदक्षिणाः ॥
[1]या लेखासंस्थिता नाड्यः कुहूश्चैव तु वारुणा ।
यशस्विनी पिङ्गला च पूषानाम्नी पयस्विनी ॥
सरस्वती शंखिनी च गान्धारी तदनन्तरे ।
इडा च हस्तिजिह्वा च ततो विश्वोदराभिधा ॥
रन्ध्रपायुध्वजाशेषपन्नासानेत्रकर्णयोः ।
जिह्वाकर्णाक्षिनासाङ्घ्रिजठरान्ताश्चतुर्दश ॥ इति ।

तदुक्तम् - 'गुरुरुपायः' इति शिवसूत्रे वार्तिककृता—

गुरुरेव परा शक्तिरीश्वरानुग्रहात्मिका ।
अवकाशप्रदानेन सैव यायादुपायताम् ॥

रूपकुहूात्मने श्रीपूर्णानन्दनाथाय नमः । दक्षनासारूपपिङ्गलात्मने स्वभावानन्दनाथाय नमः । वामनासारूपेडात्मने प्रतिभानन्दनाथाय नमः । पायुरूपालंबुसात्मने सुभगानन्दनाथाय नमः । इति तत्तत्स्थानानि संस्पृश्य नवचक्ररूपश्रीचक्रात्मने

१। यद्यपि मुद्रितपुस्तकद्वये 'या लेखाः' इत्यारभ्य चतुर्द्दशेत्यन्तग्रन्थो 'नव नाथा इति' ग्रन्थोत्तरं मुद्रितो दृश्यते तथापि तत्रैतस्यासम्बद्धतया तत उत्कृष्यात्र सन्निवेशः कृतः । दृश्यते प्रकृतानुगुण्यमत्र-नाडीषु सुषुम्नालम्बुसाभ्यामुपक्रमस्य स्थानेषु रन्ध्रपायुभ्यामुपक्रमेण सङ्गतत्वाद् इति सुधियो विभावयन्तु ।

अकृत्रिमाहमामर्शस्वरूपाद्यन्तवेदनात्।
परमेष्ठिसमत्वेन परमोपायता गुरोः ॥ इति।

मालिनीतन्त्रेऽपि—

स गुरुर्मत्समः प्रोक्तो मन्त्रवीर्यप्रकाशकः।
आदिमध्यान्तहीनास्तु मन्त्राः स्युः शरदभ्रवत् ॥
गुरोर्लक्षणमेतावदादिमान्त्यं निवेदयेत् ॥ इति।

तादृशविवेकाख्यवृत्त्यवच्छिन्नचिच्छक्तिस्तु प्राणशक्तिविहारसहभूता सुषुम्नाख्या नाड्येव विमर्शमयीत्युच्यते। श्रीगुरोस्तावद्दिव्यसिद्धमानवभेदेन रूपत्रयम्। तत्रैकैकं पुनस्त्रिविधमिति प्रकाशानन्दनाथादिसुभगानन्दनाथान्तभेदेन नवरूपता तन्त्रे प्रसिद्धा। तद्वासनामाह **तेनेति**। षष्ठ्यर्थे तृतीया। तस्याः विमर्शशक्तेर्देहः स्वरूपं नवरन्ध्रमयम्। श्रोत्रचक्षुर्नासानां द्वयं द्वयम्। जिह्वागुह्यपायव एकैक इति नवभी रन्ध्रैः स्वस्वविषयविमर्श उपादेयोपदेशग्रहणमनुपादेयमोचनादिकं च भवतीत्यादिसाधर्म्यात्तानि विमर्शरूपाण्येव। वस्तुतो 'धान्येन धनी' इतिवदभेदे तृतीया। तदभिन्नरन्ध्रनवकवान् स्वदेह इत्यर्थः। तन्त्रराजेऽपि तस्येत्यस्य नवत्व एवान्वयो न देहपदेनान्वयः। देहरन्ध्रनवत्वेन गुरोर्नवत्वं भासत इत्यर्थः। स्वदेहगतनवरन्ध्राणि नव नाथा इति। तेन रन्ध्रनवककार्यभूतस्वस्वविषयविमर्शसमष्टिं गुर्वभेदेन भावयेदिति सिध्यति।

केचित्तु श्रोत्राद्यवयवानां तत्तन्नाडीनां च तत्तया अभेदभावनामिच्छन्ति ॥ ॥ १—२ ॥

## नवचक्ररूपं श्रीचक्रम् ॥ ३ ॥

देह इत्यनुवर्तते। स्वकीयदेह एव त्रैलोक्यमोहनादिनवचक्रसमष्टिरूपश्रीचक्राभिन्नः। अवान्तरचक्रविभागस्तु आवरणदेवतास्थानैर्व्यक्तीभविष्यति तानि च स्थानानि शाखाभेदेनैव विवृतानि रहस्यत्वात्। अत एव तन्त्रराजेऽप्यनुक्तानि नित्याषोडशिकार्णवे विवृतत्वात्। तदिदमुक्तं बिन्दुसूत्रे—'अपरशिवोदितव्याकुलस्थाननिर्णीतचरणदेशिकप्रसादाधिगतविभावनारहस्यमुपसंहारम्' इति। एकः शिवस्तन्त्रकर्ता प्रसिद्धः. अपरः शिवो वेदपुरुषस्तेनापि व्याकुलतया शाखाभेदेनोक्तानां स्थानानां निर्णयनसमर्थस्य गुरोः प्रसादादधिगतं

वाराही पितृरूपा कुरुकुल्ला बलिदेवता माता ॥ ४ ॥

पुरुषार्थाः सागराः ॥ ५ ॥

---

यदीयभावनारहस्यं तादृशं देहरूपं श्रीचक्रमपरोक्षानुभवोपायेषु रहस्यं प्रति उपह्वरमिति तदर्थः पद्मपादाचार्यैर्वर्णितः।

अष्टशूला जनपदाः शिवशूलाश्चतुष्पथाः॥

इतिभारतश्लोके शिवशब्दस्य वेदपरत्वेनैव प्रयोगात्। अपरशिवैः शाखान्तरैरित्यर्थः सुवचः ॥ ३ ॥

वाराही पितृरूपा कुरुकुल्ला बलिदेवता माता ॥ ४ ॥

पुरुषार्थाः सागराः ॥ ५ ॥

स्वदेहेन्द्रियबुद्ध्यादिषु संक्रान्ता ये जनकजनन्योरंशविशेषा अस्थ्यादिमांसादिरूपा स्ते वाराहीत्वेन कुरुकुल्लात्वेन क्रमाद् भावनीयाः। वाराह्याः स्त्रीत्वेऽपि तन्मुखस्य पुंरूपत्वात्पितृरूपतोपपत्तिः। पश्चिमाद्युत्तरान्तदिक्षु विद्यमाना इक्षुसुराघृतक्षीरसागराः स्वीयधर्मादिपुरुषार्थचतुष्टयरूपाः। तन्त्रराजेऽप्युक्तम्—

बलिदेव्यः स्वमायाः स्युः पञ्चमी जनकात्मिका।

कुरुकुल्ला भवेन्माता पुरुषार्थास्तु सागराः॥ इति।

अत्र प्रथमस्वरणः शाखान्तरमूलकः। सर्ववेदान्तप्रत्ययन्यायेनोपास्त्यैक्ये ऽपि न तस्योपसंहारः। कुरुकुल्लायामिव बलिदेवतात्वविशेषणसामर्थ्याद् अतस्मिंस्तद्बुद्धिं जनयित्वा उन्मार्गप्रवर्तिकाः शक्तयः स्वमायापदेनोच्यन्त इति मनोरमाकारः ॥ ४, ५ ॥

---

देहाय नमः। पितृरूपास्थ्याद्यवयवा[1]त्मने वाराह्यै नमः। मातृरूपमांसाद्यवयवात्मने बलिदेवतायै कुरुकुल्लायै नमः। त्रिर्व्यापकम्। देहपश्चाद्भागरूपधर्मात्मन इक्षुसागराय नमः। देहदक्षिणभागरूपार्थात्मन इरासागराय नमः। देहप्राग्भागरूपकामात्मने घृतसागराय नमः। देहोदग्भागरूपमोक्षात्मने क्षीरसागराय नमः। देहात्मने नवरत्नद्वीपाय नमः। व्यापकम्। मांसात्मने पुष्परागरत्नाय नमः। रोमात्मने नीलरत्नाय नमः। त्वगात्मने वैदूर्यरत्नाय

---

१ अत्र सर्वत्र 'आत्मने' इत्यस्य स्थाने आत्मिकायै इति पाठः।

देहो नवरत्नद्वीपः ॥ ६ ॥ त्वगादिसप्तधातुरोमसंयुक्तः ॥ ७ ॥ संकल्पाः कल्पतरवस्तेजः कल्पकोद्यानम् ॥ ८ ॥

---

देहो नवरत्नद्वीपः ॥ ६ ॥ त्वगादिसप्तधातुरोमसंयुक्तः ॥ ७ ॥ संकल्पाः कल्पतरवस्तेजः कल्पकोद्यानम् ॥ ८ ॥

त्वगादिरित्यतद्गुणसंविज्ञानो बहुव्रीहिः। तेन त्वगेका रुधिराद्यस्थ्यन्तास्सप्त लोमानि चेति नवकं नवरत्नात्मकं खण्डनवकमिति सिध्यति। अत्रायं संप्रदायलभ्योऽर्थः--'[1]मांसरोमत्वग्रुधिरशुक्रमज्जास्थिमेदओजांसि पुष्परागनीलवैदूर्यविद्रुममौक्तिकमरकतवज्रगोमेदपद्मरागात्मकनवरत्नमयखण्डरूपाणि प्रतीच्यादिनिर्ऋत्यन्तदिक्षु मध्ये ऽवस्थितानीति विभावयेदिति। 'सर्वशाखाप्रत्ययमेकं कर्म' 'सर्ववेदान्तप्रत्ययमेकमुपासनम्' इति पूर्वोत्तरमीमांसान्यायाभ्यां गुणोपसंहारस्यावश्यकतया कालचक्रेश्वर्यादिदेवतानवकाभेदो ऽप्येतेष्वेव धातुषु शाखान्तरोक्तो ऽपि भावनीयः। तत्प्रकारः प्रयोगश्च स्पष्टीकरिष्येते। मानसास्संकल्पविशेषा एव सन्तानादिकल्पवृक्षाः, संकल्पपुरस्सरं कर्मप्रवृत्त्या ऽभिमतफलसिद्धेः। तेषामाधार-

---

नमः। रुधिरात्मने मा[2]णिक्यरत्नाय नमः। शुक्रात्मने[3] मौक्तिकरत्नाय नमः। मज्जात्मने मरकतरत्नाय नमः। अस्थ्यात्मने वज्ररत्नाय नमः। मेदआत्मने गोमे[4]दकरत्नाय नमः। ओजआत्मने पद्मरागरत्नाय नमः। मांसाधिदेवतायै कालचक्रेश्वर्यै नमः। रोमाधिदेवतायै मुद्राचक्रेश्वर्यै नमः। त्वगधिदेवतायै मातृकाचक्रेश्वर्यै नमः। रुधिराधिदेवतायै रत्नचक्रेश्वर्यै नमः। शुक्रा[5]धिदेवतायै देशचक्रेश्वर्यै नमः। मज्जाधिदेवतायै गुरुचक्रेश्वर्यै नमः। अस्थ्यधिदेवतायै तत्त्वचक्रेश्वर्यै नमः। मेदोऽधिदेवतायै ग्रहचक्रेश्वर्यै नमः। ओजोऽधिदेवतायै मूर्तिचक्रेश्वर्यै नमः। संकल्पात्मभ्यः कल्पतरुभ्यो नमः। तेजआत्मने कल्पकोद्यानाय नमः। मधुररसात्मने वसन्तर्तवे नमः। अम्लरसात्मने ग्रीष्मर्तवे नमः। तिक्तरसात्मने वर्षर्तवे नमः। कटुरसात्मने शरदृतवे नमः। कषायरसात्मने हेमन्तर्तवे नमः। लवणरसात्मने शिशिरर्तवे नमः। इन्द्रियात्मभ्योऽश्वेभ्यो नमः। इन्द्रियार्था-

---

१ अत्र मूलपुस्तकपाठो रसमांसेत्यारभ्य मेदांसीति मेदःशब्दान्तो दृश्यते परन्तूत्तरत्र रत्ननवकक्रमानुरोधेन विपर्यसनीय इति विपर्यस्तः। तत्रापि रसशब्दस्य प्रकृताननुगुणत्वमिति विचार्य तत्स्थाने विपर्य्यस्तक्रमेणौजःशब्दोऽवस्थापितः। प्रयोगदर्शनमप्यत्र पाठे ऽनुकूलमिति सुधीभिर्विचारणीयम्।

२ विद्रुमेति पाठः। ३ शुक्लेति पाठः। ४ गोमेधेति पाठः। ५ शुक्लेति पाठः

रसनया भाव्यमाना मधुराम्लतिक्तकटुकषायलवणरसाः षड्‌तवः ॥९

ज्ञानमर्घ्यं ज्ञेयं हविर्ज्ञाता होता ज्ञातृज्ञानज्ञेयानामभेदभावनं श्रीचक्रपूजनम् ॥१०॥

---

भूतं तेजो मन एव कल्पकोद्यानम्। 'मनो ज्योतिः' (तै० सं० १-५-३) इति श्रुतिव्यवहारादिह संकल्पविकल्पात्मकं मन एव तेजःपदेनोच्यते ॥ ६, ७, ८ ॥

रसनया भाव्यमाना मधुराम्लतिक्तकटुकषायलवणरसाः षड्‌तवः ॥९

मधुरादयो यदा रसनयाऽनुभूयन्ते तदा तादृशानुभूयमानत्वविशिष्टेषु वसन्तादिकृत्वभेदेन भावनम्, केवलानां तु तेषां स्वभिन्नपदार्थान्तरनिष्ठत्वेन मनसः पराग्वृत्त्यापत्तेः। अस्या भावनायाः प्रत्यग्वृत्त्यभ्यासरूपत्वेन तदितरनिरोधायोगात्। अतएव रसनाभाव्यत्वविशेषणम्। तेन त्वगादिनिष्ठानां व्यावृत्तिरपि फलति। तन्त्रराजे तु—

रत्नद्वीपो भवेद्देहो नवत्वं धातुरोमभिः।
संकल्पाः कल्पतरवः स्वाधारा ऋतवः स्मृताः॥

स्वाधारपदेन डाकिन्यादियोगिनीषट्काधारभूतानि सुषुम्नान्तर्गतानि षट्चक्राण्युच्यन्ते। सुषुम्नाया इडापिङ्गलात्मकचन्द्रार्कसंयोगेनानुमितकालात्मकतया तद्गतानां चक्राणामृत्वात्मकत्वं युक्तमिति व्याचक्षते। वस्तुतः प्रत्यक्षश्रुत्यनुरोधात् स्वानुभूयमानरसपरत्वमेव स्वाधारपदस्य युक्तम्। ननु भाव्यमान इति शानचा वर्तमानकालकथनादुपास्तिकाले ऽनुभूयमानरसाभाव इति चेत्, न, अनुभवानामेव संस्कारात्मना तदानीमपि सत्त्वात्। स्वमात्मा आधारः समवायी येषामिति व्युत्पत्त्या स्वाधारपदस्य रसानुभवजन्यसंस्कारपरत्वस्यैव सुवचत्वात्। डाकिन्यादीनामितः पूर्वमनुपस्थिततया स्वपदेन तत्परामर्शायोगात्। वैद्यके ऋतुभेदेन रसव्यवस्थायाः कथनेन ऋतुसंस्कारयोरभेदस्य युक्तत्वाच्च। एवंरीत्योपपत्तौ शाखान्तरमूलकत्वानुमितिरप्रसङ्गाच्च। इहाश्वगजानां परिखामण्डपयोश्च भावनोपसंहारः ॥ ९ ॥

ज्ञानमर्घ्यं ज्ञेयं हविर्ज्ञाता होता ज्ञातृज्ञानज्ञेयानामभेदभावनं श्रीचक्रपूजनम् ॥ १० ॥

**नियतिः शृङ्गारादयो रसा अणिमादयः ॥ ११ ॥**

---

एतच्चोपबृंहितं तन्त्रराजे—

ज्ञाता स्वात्मा भवेज् ज्ञानमर्घ्यं ज्ञेयं हविः स्थितम् ।
श्रीचक्रपूजनं तेषामेकीकरणमीरितम् ॥

इति । ज्ञानशब्दो घटादिज्ञानपरः । अर्घ्यशब्दः पूजासामग्रीपरः । ज्ञेयशब्दो बाह्यविषयमात्रपरः । यावानिदंताविषय स्स सर्वो ऽपि हविष्ट्वेन श्रुतौ निर्दिष्टः । नैवेद्यमिति यावत् । अत एवार्घ्यशब्दस्तदितरविशेषार्घ्यपरतया संकोच्यः । पूज्या देवता तु चिद्रूपा प्रसिद्धत्वान्नोक्ता । अहन्ताविषयो ज्ञाता पूजकः, प्रकृतत्वाद् विशिष्य श्रुतावनुक्तो ऽपि तन्त्रे निर्दिष्टः । स्वात्मचैतन्याद्भेदेन प्रतीयमानानां ज्ञातृज्ञानज्ञेयानां भेदकनामरूपाननुसन्धानपूर्वकं चिन्मात्ररूपतया विभावनमिह विधीयते । तन्त्रे भावे ल्युडन्तपूजनपदार्थस्तु त्रितयाभेदमात्रम् न त्वभेदविभावनम् । लोके हि विशेषार्घ्यजलबिन्द्वादेर्नैवेद्यस्य स्वात्मनश्च देवतायां समर्पणसम्बन्ध एव पूजा । तद्वत् प्रकृतेऽपि त्रयाणां चिता सह तादात्म्यस्यैव तथात्वमुचितम् । तदनुकूला कृतिर्हि विभावनमत्राभिधीयते । विभावनस्यैव पूजनपदार्थत्वे विभावनपूजनयोरभेदेन विभावनान्तरमापद्येत । तेन करणे ल्युडन्तः श्रौतः पूजनशब्दः पूजानुकूलकृतिविषयपर इति द्योतनायैकीकरणमित्युपबृंहितम् ॥ १० ॥

**नियतिः शृङ्गारादयो रसा अणिमादयः ॥ ११ ॥**

नियतिः प्रारब्धमेकम्, शृङ्गारादयो नव । आदिपदाद्भयानकरौद्रबीभत्सहास्यवीरकरुणाद्भुतशा[१]न्तपरिग्रहः । एतेषां दशानां क्रमेणाणिमादिसिद्धिदशकाभेदः ।

---

त्मभ्यो गजेभ्यो नमः । करुणात्मिकायै तोयपरिखायै नमः । ओजःपुञ्जात्मने माणिक्यमण्डपाय नमः । ज्ञानात्मने विशेषार्घ्याय नमः । ज्ञेयात्मने हविषे नमः । ज्ञात्रात्मने स्वात्मने नमः । चि[२]दात्मने श्रीमहात्रिपुरसुन्दर्यै नमः । इति तत्तदनुसन्धानपूर्वकं मनसा नत्वा ज्ञातृज्ञानज्ञेयानां नामरूपविलापनानुसन्धानेन चिन्मात्ररूपताविभावनेन क्षणं विश्रम्य पञ्चदश नित्या यजेत् । हृदि हस्तं निधाय चत्वारिंशदधिकचतुर्दशशतश्वासा[३]त्मने

---

१ । शान्तीति पाठः । २ । चिदात्मिकायै इति पाठः ।

३ । श्वासात्मिकाया इति पाठः ।

कामक्रोधलोभमोहमदमात्सर्य्यपुण्यपापमया ब्राह्म्याद्यष्ट शक्तयः ॥ १२ ॥

आधारनवकं मुद्राशक्तयः ॥ १३ ॥

पृथिव्यप्तेजोवाय्वाकाशश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपाद-पायूपस्थानि मनोविकारः कामाकर्षिण्यादिषोडश शक्तयः ॥ १४

---

अत्र क्रमे मूलं बिन्दुसूत्रतो ज्ञेयम्। शृङ्गारादीत्यादिपदेन गृहीतानां क्रमस्याज्ञातत्वेनान्यतो ग्रहणस्योचितत्वात्। कामाकर्षिण्यादिवक्ष्यमाणवासिनीनां तु पाठक्रमेण निर्णयसम्भवान्निधिकारोक्तव्युत्क्रमो यावन्मूलदर्शनं न विश्वसनीयः ॥ ११ ॥

कामक्रोधलोभमोहमदमात्सर्य्यपुण्यपापमया ब्राह्म्याद्यष्ट शक्तयः ॥ १२ ॥

अत्र मयट्प्रत्ययो ब्रह्ममयं जगदित्यादाविवाभेदार्थकः। यत्तु तन्त्रराजे—

श्रीचक्रे सिद्धयः प्रोक्ता रसा नियतिसंयुताः।
ऊर्मयः पुण्यपापे च ब्राह्म्याद्या मातरः स्मृताः ॥

इत्युक्तं तत्राप्यूर्मिशब्दः कामाद्यरिषड्वर्गपर एव, पुराणेषु कामादेरप्यूर्मिपदेन क्वचिद्व्यवहारदर्शनात्। तेन क्षुधापिपासाशोकमोहजरामरणपरत्वेन परेषां व्याख्यानं प्रत्यक्षश्रुतिविरोधादनादेयम् ॥ १२ ॥

आधारनवकं मुद्राशक्तयः ॥ १३ ॥

पृथिव्यप्तेजोवाय्वाकाशश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपाद-पायूपस्थानि मनोविकारः कामाकर्षिण्यादिषोडश शक्तयः ॥ १४ ॥

---

प्रतिपत्तिथिरूपकामेश्वरीनित्यायै नमः। तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने द्वितीयातिथिरूपभगमालिनीनित्यायै नमः। तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने तृतीयातिथिरूपनित्यक्लिन्नानित्यायै नमः। तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने चतुर्थीतिथिरूपभेरुण्डानित्यायै नमः। तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने पञ्चमीतिथिरूपवह्निवासिनीनित्यायै नमः।

मूलाधारादिषट्कमूर्ध्वाधःसहस्रदलकमले द्वे लम्बिकाग्रमेकमिति नवाधारास्तेषां समष्टिरेकेति दश। एतैः संक्षोभिण्यादित्रिखण्डान्तमुद्राभिमानिदशकस्याभेदः। तन्त्रान्तरे तृतीयरेखाभिमानिदेवताभावात्तदनुयायिबिन्दुसूत्रोक्तानामावरणदेवतास्थानानामिह न ग्रहणम्, अपितु योगिनीहृदयस्यापि कादिमतानुयायित्वात्तत्र मुद्रादेवतानां शरीरावयवेषु अवस्थानकथनात्तान्येव स्थानानि

तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने षष्ठीतिथिरूपवज्रेश्वरीनित्यायै नमः। तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने सप्तमीतिथिरूपशिवदूतीनित्यायै नमः। तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने अष्टमीतिथिरूपत्वरितानित्यायै नमः। तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने नवमीतिथिरूपकुलसुन्दरीनित्यायै नमः। तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने दशमीतिथिरूपनित्यानित्यायै नमः। तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने एकादशीतिथिरूपनीलपताकानित्यायै नमः। तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने द्वादशीतिथिरूपविजयानित्यायै नमः। तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने त्रयोदशीतिथिरूपसर्वमङ्गलानित्यायै नमः। तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने चतुर्दशीतिथिरूपज्वालामालिनीनित्यायै नमः। तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने पौर्णमासीतिथिरूपचित्रानित्यायै नमः। नित्यामन्त्रानपि तत्तदादौ केचित्पठन्ति। इयं नित्या[1]भावना सर्वान्त एव वा कार्या। चतुरस्राद्यरेखायै नम इति वक्ष्यमाणस्थानेषु व्यापकं न्यस्य। दक्षांसपृष्ठरूपशान्तरसात्मने ऽणिमासिद्धेत्र नमः। दक्षपाण्यङ्गुल्यग्ररूपाद्भुतरसात्मने लघिमासिद्धेत्र नमः। दक्षस्फिग्रूपकरुणरसात्मने महिमासिद्धेत्र नमः। दक्षपादाङ्गुल्यग्ररूपवीररसात्मन ईशितासिद्धेत्र नमः। वामपादाङ्गुल्यग्ररूपहास्यरसात्मने वशितासिद्धेत्र नमः। वामस्फिग्रूपबीभत्सरसात्मने प्राकाम्यसिद्धेत्र नमः। वामपाण्यङ्गुल्यग्ररूपरौद्ररसात्मने भुक्तिसिद्धेत्र नमः। वामांसपृष्ठरूपभयानकरसात्मन इच्छासिद्धेत्र नमः। चूलीमूलरूपशृङ्गाररसात्मने प्राप्तिसिद्धेत्र नमः। चूलीपृष्ठरूपनियत्यात्मने सर्वकामसिद्धेत्र नमः। चतुरस्रमध्यरेखायै नम इति। तदन्तर्व्यापकं न्यस्य पादाङ्गुष्ठद्वयरूपकामात्मने ब्राह्म्यै नमः। दक्षपार्श्वरूपक्रोधात्मने माहेश्वर्यै नमः। मूर्द्धरूपलोभात्मने कौमार्यै नमः। वामपार्श्वरूपमोहात्मने वैष्णव्यै नमः।

१। नित्यं भावनेति पाठः।

वचनादानगमनविसर्गानन्दहानोपादानोपेक्षाख्यबुद्धयोऽनङ्गकुसुमाद्यष्टौ ॥ १५ ॥

अलंबुसा कुहूर्विश्वोदरा वारणा हस्तिजिह्वा यशोवती पयस्विनी गान्धारी पूषा शंखिनी सरस्वतीडा पिङ्गला सुषुम्ना चेति चतुर्दश नाड्यः सर्वसंक्षोभिण्यादिचतुर्दश शक्तयः ॥ १६ ॥

---

ग्राह्याणि। एतदुपनिषदुक्तदेवताविभानस्य पूजान्यासोभयरूपतया निधिकारादिसाम्प्रदायिकसम्मतत्वात्। तेन कतिपये न्यासधर्मा स्तन्त्रोक्ता इह योजनीया इत्याहुः। 'ते चतुरस्राद्यरेखायै नमः' इत्यादितो 'न्यसेत्' इत्यादयः प्रयोगविधावुपसंहरिष्यन्ते। अत्र प्रत्यावरणमेकैकस्याः सिद्धेर्मुद्रायाश्च विभावनमग्रे विधास्यते। तत्तच्चक्रेश्वरीविभावनमप्यन्यत्रोक्तमुपसंहार्यम्। पञ्चभूतानि एकादशेन्द्रियाणि च सर्वाशापरिपूरकचक्रस्थदेवताभिन्नाः। अत्र विकारशब्दः षोडशसंख्यापरः। मनोविकार इत्येकं पदं वा। विकृतं मन इत्यर्थः। 'कृदभिहितो भावो द्रव्यवत् प्रकाशत' इति व्युत्पत्तेः। तेन मन इक्षुधनुरित्यनेन न पौनरुक्त्यम् ॥ १३, १४ ॥

वचनादानगमनविसर्गानन्दहानोपादानोपेक्षाख्यबुद्धयोऽनङ्गकुसुमाद्यष्टौ ॥ १५ ॥

अलंबुसा कुहूर्विश्वोदरा वारणा हस्तिजिह्वा यशोवती पयस्विनी गान्धारी पूषा शंखिनी सरस्वतीडा पिङ्गला सुषुम्ना चेति चतुर्दश नाड्यः सर्वसंक्षोभिण्यादिचतुर्दश शक्तयः ॥ १६ ॥

कर्मेन्द्रियाणां वचनादयो विषयाः पञ्च। हानं त्यागः। उपादानं ग्रहणम्। उपेक्षा औदासीन्यम्। इष्टत्रबुद्धित्रयं चेत्यष्टौ। इदमेव बुद्धित्रयं दोषपदेनोक्तं तन्त्रराजे—

---

वामजानुरूपमदात्मने वाराह्यै नमः। दक्षजानुरूपमात्सर्यात्मन इन्द्राण्यै नमः। दक्षबहिरंसरूपपुण्यात्मने चामुण्डायै नमः। वामबहिरंसरूपपापात्मने महालक्ष्म्यै नमः। चतुरस्रान्त्यरेखायै नम इति तद[1]न्तर्व्यापकं न्यस्य पादाङ्गुष्ठद्वयरूपाधः[2]सह-

---

१। ततोऽप्यन्तरिति पाठः। २। रूपायेति पाठः।

भूतेन्द्रियमनांस्येव क्रमान्नित्याः कलाः पुनः।
कर्मेन्द्रियार्थदोषाश्च ज्ञेयाः स्युः शक्तयोऽष्टकाः॥ इति।

स्वदलकमलात्मने सर्वसंक्षोभिणीमुद्रायै नमः। दक्षपार्श्वरूपमूलाधारात्मने सर्वविद्राविणीमुद्रायै नमः। मूर्धरूपस्वाधिष्ठानात्मने सर्वाकर्षिणीमुद्रायै नमः। वामपार्श्वरूपमणिपूरात्मने सर्ववशंकरीमुद्रायै नमः। वामजानुरूपानाहतात्मने सर्वोन्मादिनीमुद्रायै नमः। दक्षजानुरूपविशुद्धात्मने सर्वमहांकुशामुद्रायै नमः। दक्षान्तरांसरूपवियोन्यात्मने[1] सर्वखेचरीमुद्रायै नमः। वामान्तरांसरूपाज्ञाना[2]त्मने सर्वबीजमुद्रायै नमः। द्वादशान्त[र]रूपोर्ध्वसहस्रदलकमलात्मने सर्वयोनिमुद्रायै नमः। पादाङ्गुष्ठरूपाधारनवकात्मने सर्वत्रिखण्डामुद्रायै नमः। [3]हृद्रूपत्रैलोक्यमोहनचक्रेश्वर्यै त्रिपुरायै नम इति तत्तत्स्थानानि स्पृष्ट्वैताः सर्वाः स्वात्माभिन्नत्वेन विभाव्य स्वात्मनः परिच्छेदराहित्यं विभावयेत्। प्रकटयोगिनीरूपस्वात्मात्मनेऽणिमासिद्ध्यै नमः।[4] अपरिच्छिन्नस्वात्मात्मने सर्वसंक्षोभिणीमुद्रायै नमः। इति प्रयोगपूर्वकं वा[5] विभावयेत्। षोडशदलपद्माय नम इति तदन्तर्व्यापकं न्यस्य। दक्षश्रोत्रपृष्ठरूपपृथिव्यात्मने कामाकर्षिणीनित्याकलायै नमः। दक्षांसरूपाबात्मने बुद्ध्याकर्षिणीनित्याकलायै नमः। दक्षकूर्पररूपतेजआत्मने अहंकाराकर्षिणीनित्याकलायै नमः। दक्षकरपृष्ठरूपवा[6]य्वात्मने शब्दाकर्षिणीनित्याकलायै नमः। दक्षोरुरूपाकाशात्मने स्पर्शाकर्षिणीनित्याकलायै नमः। दक्षजानुरूपश्रोत्रात्मने रूपा[7]कर्षिणीनित्याकलायै नमः। दक्षगुल्फरूपत्वगात्मने रसाकर्षिणीनित्याकलायै नमः। दक्षपादतलरूपचक्षुरात्मने गन्धाकर्षिणीनित्याकलायै नमः। वामपादतलरूपजिह्वात्मने चित्ताकर्षिणीनित्याकलायै नमः। वामगुल्फरूपप्राणात्मने धैर्याकर्षिणीनित्याकलायै नमः। वामजानुरूपवागात्मने स्मृत्याकर्षिणीनित्याकलायै नमः। वामोरुरूपपाण्यात्मने नामाकर्षिणीनित्याकलायै नमः। वामकरपृष्ठरूपपादात्मने बीजाकर्षिणीनित्याकलायै नमः। वामकूर्पररूपपाय्वात्मने आत्माकर्षिणीनित्याकलायै नमः। वामांसरूपोपस्थात्मनेऽमृताकर्षिणीनित्याकलायै नमः।

१। रूपिन्द्रयीनोति पाठः। २। पाज्ञानात्मने इति न पुस्तकान्तरे। ३। एतद्रूपेति पाठः।

४। हृद्रूपत्रैलोक्यमोहनचक्रेश्वर्यै त्रिपुरायै नम इति तत्तत्स्थानानि स्पृष्ट्वैता इति पाठोऽधिकः पुस्तकान्तरे।

५। वेत्यधिक पाठः। ६। पाद्वेति पाठः। ७। अहंकाराकर्षीति पाठः।

८। आत्माकर्षिणीति पाठः।

**प्राणापानव्यानोदानसमाननागकूर्मकृकरदेवदत्तधनञ्जया दश वायवः सर्वसिद्धिप्रदादिबहिर्दशारदेवताः ॥ १७ ॥**

---

वातपित्तकफा दोषा इत्यन्ये। नाथनवकवासनाव्याख्यानावसरे नाडीनां स्वरूपं प्राग्विवृतम्। तदभिन्ना मन्वश्रदेवताः। एतासां नाडीनां पूर्वोक्तपृथिव्यादिषोडशकस्य च व्युत्क्रमो भूयानेव निधिग्रन्थे दृश्यते। श्रौतक्रमबोधकप्रत्यक्षश्रुतिमन्तरेणाल्पपाठक्रमस्य त्यागायोगात्तत्र मूलं चिन्त्यम् ॥ १५, १६ ॥

**प्राणापानव्यानोदानसमाननागकूर्मकृकरदेवदत्तधनञ्जया दश वायवः सर्वसिद्धिप्रदादिबहिर्दशारदेवताः ॥ १७ ॥**

---

वामश्रोत्रपृष्ठरूपविक्षतमनआत्मने शरीराकर्षिणीनित्याकलायै नमः। हृद्रूपसर्वाशापरिपूरकचक्रेश्वर्यै त्रिपुरेश्वर्यै नमः। गुप्तयोगिनीरूपस्वात्मात्मने लघिमासिद्ध्यै नमः। अपरिच्छिन्नरूपस्वात्मात्मने सर्वविद्राविणीमुद्रायै नमः। अष्टदलपद्माय नम इति व्यापकं न्यस्य। दक्षशं[1]खरूप[2]वचनात्मने अनङ्गकुसुमायै नमः। दक्षजतुरूपादानात्मने अनङ्गमेखलायै नमः। दक्षोरुरूपगमनात्मने अनङ्गमदनायै नमः। दक्षगुल्फरूपविसर्गात्मने अनङ्गमदनातुरायै नमः। वामगुल्फरूपानन्दात्मने अनङ्गरेखायै नमः। वामोरुरूपहानाख्यबुद्ध्यात्मने अनङ्गवेगायै नमः। वामजतुरूपोपादानाख्यबुद्ध्यात्मने अनङ्गाङ्कुशायै नमः। वामशंखरूपोपेक्षाख्यबुद्ध्यात्मने अनङ्गमालिन्यै नमः। हृद्रूपसर्वसंक्षोभणचक्रेश्वर्यै त्रिपुरसुन्दर्यै नमः। गुप्ततरयोगिनीरूपस्वात्मात्मने महिमासिद्ध्यै नमः। अपरिच्छिन्नरूपस्वात्मात्मने सर्वाकर्षिणीमुद्रायै नमः। चतुर्दशारचक्राय नम इति व्यापकं न्यस्य। ललाटमध्यभागरूपालंबुसात्मने सर्वसंक्षोभिणीशक्त्यै नमः। ललाटदक्षभागरूपकु[3]ह्वात्मने सर्वविद्राविणीशक्त्यै नमः। दक्षगण्डरूपविश्वोदरात्मने सर्वाकर्षिणीशक्त्यै नमः। दक्षांसरूपवारणात्मने सर्वाह्लादिनीशक्त्यै नमः। दक्षपार्श्वरूपहस्तिजिह्वात्मने सर्वसंमोहिनीशक्त्यै नमः। दक्षोरुरूपयशोवत्यात्मने सर्वस्तंभिनीशक्त्यै नमः। दक्षजङ्घारूपपयस्विन्यात्मने सर्वजं[5]भिनीशक्त्यै नमः। वाम[6]जङ्घारूपगान्धार्यात्मने सर्व-

---

१। दशशाखेति पाठः। २। गमनात्मन इति पाठः। ३। कुलात्मन इति पाठः।
४। रञ्जिनीति पाठः। ५। स्तंभिनीति वा पाठः। ६। वामकोणेति पाठः।

एतद्वायुसंसर्गकोपाधिभेदेन रेचकः पाचकः शोषको दाहकः प्लावक इति प्राणमुख्यत्वेन पञ्चधा जठराग्निर्भवति ॥ १८ ॥

क्षारक उद्गारकः क्षोभको जृम्भको मोहक इति नागप्राधान्येन पञ्चविधास्ते मनुष्याणां हदेगा भक्ष्यभोज्यचोष्यलेह्यपेयात्मकपञ्चविधमन्नं पाचयन्ति ॥ १९ ॥

एता दशवह्निकलास्सर्वज्ञाद्या अन्तर्दशारदेवताः ॥ २० ॥

---

एतद्वायुसंसर्गकोपाधिभेदेन रेचकः पाचकः शोषको दाहकः प्लावक इति प्राणमुख्यत्वेन पञ्चधा जठराग्निर्भवति ॥ १८ ॥

क्षारक उद्गारकः क्षोभको जृम्भको मोहक इति नागप्राधान्येन पञ्चविधास्ते मनुष्याणां देहगा भक्ष्यभोज्यचोष्यलेह्यपेयात्मकपञ्चविधमन्नं पाचयन्ति ॥ १९ ॥

एता दशवह्निकलास्सर्वज्ञाद्या अन्तर्दशारदेवताः ॥ २० ॥

प्राणाद्याः पञ्च महावायवो नागाद्या उपवायवः पञ्चेत्येवं दशापि सर्वार्थसाधकचक्रस्थदेवताभिरभिन्नाः। तन्त्रराजे ऽपि—

नाड्यश्चतुर्दश प्रोक्ताः क्षोभिण्याद्यास्तु शक्तयः।
वायवो दश संप्रोक्ताः सर्वसिद्ध्यादिशक्तयः॥ इति।

एकस्यैवौदर्याग्नेः प्राणादिदशवायुसम्बन्धेनौपाधिकत्वं वाक्यद्वयेन विवृतम्। तृतीयवाक्येन पाचकस्य कार्यम्। चतुर्थवाक्येन सर्वार्थसाधकचक्रस्थदेवताभिरभेद उक्तः। धातुसप्तके दोषत्रये च विद्यमानत्वाद् दशधात्वमग्नेरन्ये मन्यन्ते। तन्त्रराजे तु—

---

वशंकरीशक्त्यै नमः। वामोरुरूपपूषात्मने सर्वरञ्जिनीशक्त्यै नमः। वामपार्श्वरूपशंखिन्यात्मने सर्वोन्मादिनीशक्त्यै नमः। वामांसरूपसरस्वत्यात्मने सर्वार्थसाधिनीशक्त्यै नमः। वामगण्डरूपेडात्मने सर्वसंपत्तिपूरणीशक्त्यै नमः। ललाटवामभागरूपपिङ्गलात्मने सर्वमन्त्रमयीशक्त्यै नमः। ललाटपृष्ठभागरूपसुषुम्नात्मने सर्वद्वन्द्वक्षयंकरीशक्त्यै नमः। हृद्रूपसर्वसौभाग्यदायकचक्रेश्वर्यै त्रिपुरवासिन्यै

**शीतोष्णसुखदुःखेच्छाः सत्त्वं रजस्तमो वशिन्यादिशक्तयोऽष्टौ ॥२१॥ शब्दादितन्मात्राः पञ्च पुष्पबाणाः ॥ २२ ॥ मन इक्षुधनुः ॥ २३ ॥ रागः पाशः ॥ २४ ॥ द्वेषोऽङ्कुशः ॥ २५ ॥**

---

वह्नयो दश सम्प्रोक्ताः सर्वज्ञाद्याश्च शक्तयः ।

इत्यत्र संप्रोक्ता इत्यस्य श्रुतौ कथिता रेचकादय इत्येवार्थः । केचित्प्रोक्तपदं वक्ष्यमाणार्थकं मन्यन्ते । तस्मिन्नेव पटले—

अग्निर्वह्निः शुचिस्तेजः प्रभा दावः शुचिर्द्युतिः ।

दाहो ग्रासः * * * *

इति नामदशकस्योत्तरत्र कथनात् । परन्तु प्रयोगे मन्त्रघटकता श्रौतनाम्नामेवोचिता । 'विधिशब्दस्य मन्त्रत्वे' ( जै० सू० २३ पा० ४ अ० १० ) इति दाशमिकाधिकरणन्यायात् ॥ १७, १८, १९, २० ॥

**शीतोष्णसुखदुःखेच्छाः सत्त्वं रजस्तमो वशिन्यादिशक्तयोऽष्टौ ॥२१॥**

शीतोष्णे सुखदुःखे चेति द्वन्द्वद्वयम् । इच्छैका सत्त्वादित्रयमित्यष्टौ वाग्देवताष्टकरूपाः । तन्त्रराजेऽपि—

शीतोष्णसुखदुःखेच्छा गुणाः प्रोक्ताः क्रमेण वै ।

वशिन्याद्याः शक्तयः स्युः * * ॥२१॥

**शब्दादितन्मात्राः पञ्च पुष्पबाणाः ॥ २२ ॥**

**मन इक्षुधनुः ॥ २३ ॥ रागः पाशः ॥ २४ ॥**

**द्वेषोऽङ्कुशः ॥ २५ ॥**

शब्दस्पर्शरूपरसगन्धास्तन्मात्रपदेनोच्यन्ते । तेच मुखेऽभिमुखा अन्ते परुषाः । अतएव बाणाभिन्नाः । अविकृतं मनः पुण्ड्रेक्षुचापरूपम् । विषयपरामर्शरूपाणामिन्द्रियाणां प्रेरकत्वात् । रागः प्रीतिः । षट्त्रिंशदन्तर्गततत्त्वविशेषः, न

---

नमः । संप्रदाययोगिनीरूपस्वात्मात्मने ईशितासिद्ध्यै नमः । अपरिच्छिन्नरूपस्वात्मात्मने सर्ववशंकरीमुद्रायै नमः । दशारचक्राय नम इति व्यापकं न्यस्य । दक्षाक्षिरूपप्राणात्मने सर्वसिद्धिप्रदादेव्यै नमः । नासामूलरूपापानात्मने सर्व-

त्विच्छासामान्यम्। तेनारुणावाग्देवतावासनया न पौनरुक्त्यम्। बन्धकत्वेन साम्यात्तस्य पाशाभेदः। द्वेषः क्रोधः। तस्य द्वेष्यान्निवारकत्वादङ्कुशत्वम्। उक्तं च रहस्यनामसाहस्रे—

रागस्वरूपपाशाढ्या क्रोधाकाराङ्कुशोज्ज्वला।
मनोरूपेक्षुकोदण्डा पञ्चतन्मात्रसायका॥ इति।

तन्त्रराजेऽपि—

... ... ... तन्मात्राः पुष्पसायकाः।
मनो भवेदिक्षुधनुः पाशो राग उदीरितः॥
द्वेषः स्यादङ्कुशः प्रोक्तः क्रमेण वरवर्णिनि॥ इति। २२,२३,२४,२५॥

---

संपत्प्रदादेव्यै नमः। वामनेत्ररूपव्यानात्मने सर्वप्रियंकरीदेव्यै नमः। कुक्षीशकोणरूपोदानात्मने सर्वमङ्गलकारिणीदेव्यै नमः। कुक्षिवायुकोणरूपसमानात्मने सर्वकामप्रदादेव्यै नमः। वामजानुरूपनागात्मने सर्वदुःखविमोचिनीदेव्यै नमः। गुदरूपकूर्मात्मने सर्वमृत्युप्रशमनीदेव्यै नमः। दक्षजानुरूपकृकरात्मने सर्वविघ्नविनाशिनीदेव्यै नमः। कुक्षिनिर्ऋतिकोणरूपदेवदत्तात्मने सर्वाङ्गसुन्दरीदेव्यै नमः। कुक्षिवह्निकोणरूपधनंजयात्मने सर्वसौभाग्यदायिनीदेव्यै नमः। हृद्रूपसर्वार्थसाधकचक्रेश्वर्यै त्रिपुराश्रियै नमः। कुलकौलयोगिनीरूपस्वात्मात्मने वशितासिद्ध्यै नमः। अपरिच्छिन्नरूपस्वात्मात्मने सर्वोन्मादिनीमुद्रायै नमः। अन्तर्दशारचक्राय नम इति व्यापकं न्यस्य। दक्षनासारूपरेचकाग्न्यात्मने सर्वज्ञादेव्यै नमः। दक्षसृक्किरूपपाचकाग्न्यात्मने सर्वशक्तिप्रदादेव्यै नमः। दक्षस्तनरूपशोषकाग्न्यात्मने सर्वैश्वर्यप्रदादेव्यै नमः। दक्षवृषणरूपदाहकाग्न्यात्मने सर्वज्ञानमयीदेव्यै नमः। सीवनीरूपप्लावकाग्न्यात्मने सर्वव्याधिविनाशिनीदेव्यै नमः। वामवृषणरूपक्षारकाग्न्यात्मने सर्वाधारस्वरूपादेव्यै नमः। वामस्तनरूपोद्गारकाग्न्यात्मने सर्वपापहरादेव्यै नमः। वामसृक्किरूपक्षोभकाग्न्यात्मने सर्वानन्दमयीदेव्यै नमः। वामनासारूपजृम्भकाग्न्यात्मने सर्वरक्षास्वरूपिणीदेव्यै नमः। नासाग्ररूपमोहकाग्न्यात्मने सर्वेप्सितफलप्रदादेव्यै नमः। हृद्रूपसर्वरक्षाकरचक्रेश्वर्यै त्रिपुरमालिन्यै नमः। निगर्भयोगिनीरूपस्वात्मात्मने प्राकाम्यसिद्ध्यै नमः। अपरिच्छिन्नरूपस्वात्मात्मने महाङ्कुशामुद्रायै नमः। अष्टकोणचक्राय नम इति व्यापकं न्यस्य। चिबुकदक्षभागरूपशीतात्मने वशिनीवाग्देवतायै नमः। कण्ठ-

अव्यक्तमहदहङ्काराः[1] कामेश्वरीवज्रेश्वरी भगमालिन्योऽन्तस्त्रिकोणगा देवताः ॥ २६ ॥

निरुपाधिकसंविदेव कामेश्वरः ॥ २७ ॥

---

अव्यक्तमहदहङ्काराः कामेश्वरीवज्रेश्वरी भगमालिन्योऽन्तस्त्रिकोणगा देवताः ॥ २६ ॥

अत्र महदव्यक्तशब्दौ बुद्धिप्रकृतितत्त्वपरौ, अव्यक्तादिपदद्वये समाहारद्वन्द्वः। परन्तु न यथासंख्यम् त्रितययोरभेदः। अपि तु अव्यक्ताहङ्कृतिमहदाकाराः प्रतिलोमतः कामेश्वर्यादिदेव्यः स्युरिति तन्त्रोपबृंहणानुरोधेन व्युत्क्रमेण वासना ॥२६॥

अत्र मुख्या विशेष्या ललिता। विशेष्यतावच्छेदकः कामेश्वरः। अनयोश्च रक्तचरणरूपके रक्तशुक्लवर्णौ। अनयोरेनयोरेव सम्बन्धविशेषः। तस्यैव स्थूलं सूक्ष्मं मिश्रचरणत्वं चेति त्रितयं रूपम्। प्रकारत्वेन विषय उपासकः। तत्र मुख्यविशेष्येण सह सम्बन्धः प्रकारतावच्छेदकश्चेत्येकादश पदार्थांस्त्रिभिर्वाक्यैर्विवेचयति निरुपाधिकेत्यादिभिः—

---

दक्षभागरूपोषणात्मने कामेश्वरीवाग्देवतायै नमः। हृदयदक्षभागरूपसुखात्मने मोदिनीवाग्देवतायै नमः। नाभिदक्षभागरूपदुःखात्मने विमलावाग्देवतायै नमः। नाभिवामभागरूपेच्छात्मने अरुणावाग्देवतायै नमः। हृदयवामभागरूपसत्त्वगुणात्मने जयिनीवाग्देवतायै नमः। कण्ठवामभागरूपरजोगुणात्मने सर्वेश्वरीवाग्देवतायै नमः। चिबुकवामभागरूपतमोगुणात्मने कौलिनीवाग्देवतायै नमः। हृद्रूपसर्वरोगहरचक्रेश्वर्यै त्रिपुरासिद्धायै नमः। रहस्ययोगिनीरूपस्वात्मामने भुक्तिसिद्ध्यै नमः। अपरिच्छिन्नरूपस्वात्मात्मने खेचरीमुद्रायै नमः। हृदयत्रिकोणाधोभागरूपपञ्चतन्मात्रात्मकेभ्यः सर्वजम्भनबाणेभ्यो नमः। तद्दक्षभागरूपमनआत्मकाभ्यां सर्वमोहनधनुर्भ्यां नमः। तदूर्ध्वभागरूपरागात्मकाभ्यां सर्ववशंकरपाशाभ्यां नमः। तद्वामभागरूपद्वेषात्मभ्यां सर्वस्तम्भकरांकुशाभ्यां नमः। त्रिकोणचक्राय नमः। इति व्यापकं न्यस्य। हृदयत्रिकोणाग्रभागरूपमहत्तत्त्वात्मने कामेश्वरीदेव्यै नमः। तद्दक्षकोणरूपाहङ्कारात्मने वज्रेश्वर्यै देव्यै नमः।

---

[1] भाष्यानुरोधेन—'अव्यक्तमहदङ्कारस्' इति पाठो ऽपेक्षणीयः, परन्तु मुद्रितपुस्तकेषु सर्वत्रोपरीव पाठदर्शनादेष एवात्र स्थापितः।

**सदानन्दपूर्णः स्वात्मैव परदेवता ललिता ॥ २८ ॥**

**लौहित्यमेतस्य सर्वस्य विमर्शः ॥ २९ ॥**

---

**निरुपाधिकसंविदेव कामेश्वरः ॥ २७ ॥**

उपाधिरहितं शुद्धं चैतन्यमेव बिन्दुरूपः कामेश्वरः। 'संवित्कामेश्वरः स्मृत' इत्युपबृंहणात् ॥ २७ ॥

**सदानन्दपूर्णः स्वात्मैव परदेवता ललिता ॥ २८ ॥**

संविदो निरुपाधिकत्वविशेषणबलात्तदङ्कनिलयायाः परदेवतायाः किञ्चिदुपाधिविशिष्टत्वमात्रेण ततो भिन्नोपास्यत्वम्। तादृशश्च स्वात्मैव। स्वाभिन्न एव परदेवता उपास्तिरूपज्ञानविशेषनिरूपितमुख्यविशेष्यताशालिनी। तामेवासाधारणनाम्ना निर्दिशति ललितेति। अत्र सदानन्दपूर्ण इति उपाधिकथनम्। तेनान्तःकरणावच्छिन्नस्य न ललितात्वम् तस्योपासककोटौ प्रवेशात्। अतएव स्वात्मेत्युक्तम् स्वस्योपासकस्यात्मान्तर्यामीति कथयति। इत्थं च एक एवात्माऽन्तःकरणोपाधिकः सन्नुपासको भवति। सत्त्वचित्त्वानन्दत्वरूपधर्मत्रयविनिर्मुक्तधर्मिमात्रमुपास्यदेवताधारभूतः कामेश्वरो भवतीति विवेकः। तदुक्तं रत्नत्रयपरीक्षायां—

> नित्यं निर्दोषगन्धं निरतिशयसुखं ब्रह्मचैतन्यमेकम्।
> धर्मो धर्मीतिभेदद्वितयमिति पृथग्भूय मायावशेन ॥
> धर्मस्तत्रानुभूतिः सकलविषयिणी सर्वकार्यानुकूला।
> शक्तिः स्वेच्छादिरूपा भवति गुणगणश्चाश्रयस्त्वेक एव ॥
> कर्तृत्वं तत्र धर्मं कलयति जगतां पञ्चसृष्ट्यादिकृत्ये।
> धर्मः पुंरूप आत्मा सकलजगदुपादानभावं बिभर्ति ॥

---

तद्वामकोणरूपाव्यक्तात्मने भगमालिनीदेव्यै नमः। हृद्रूपसर्वसिद्धिप्रदचक्रेश्वर्यै त्रिपुराम्बायै नमः। अतिरहस्ययोगिनीरूपस्वात्मात्मने इच्छासिद्ध्यै नमः। अपरिच्छिन्नस्वात्मात्मने बीजमुद्रायै नमः। बिन्दुचक्राय नम इति व्यापकं न्यस्य। हृन्मध्यरूपनिरुपाधिकसंविन्मात्ररूपकामेश्वराङ्कनिलयायै सच्चिदानन्दैकब्रह्मात्मने परदेवतायै ललितायै महात्रिपुरसुन्दर्यै नमः। निरुपाधिकचैतन्यमेव सच्चिदानन्दधर्मकमन्तःकरणप्रतिबिम्बितम् सदाऽहमेवेत्यनुसन्धानं ललिताया लौहित्यमिति

अनन्यचित्तत्वेन च सिद्धिः ॥ ३० ॥

---

स्त्रीरूपं प्राप्य दिव्या भवति च महिषी स्वाश्रयस्यादिकर्तुः ।
प्रोक्ता धर्मप्रभेदावपि निगमविदां धर्मिवद्ब्रह्मकोटिः ॥ इति । २८ ॥

## लौहित्यमेतस्य सर्वस्य विमर्शः ॥ २९ ॥

सर्वपदेन कामेश्वरो ललिता स्वयं चेति त्रितयम् । एतस्य विमर्शो ऽनुसंधानमेव देवीनिष्ठं लौहित्यम् । सर्वस्य स्वात्मन्यनुरागाद्रागलौहित्ययोरभेदात् । उक्तं च तन्त्रराजे—

स्वात्मैव देवता प्रोक्ता ललिता विश्वविग्रहा ।
लौहित्यं तद्विमर्शः स्यादुपास्तिरिति भावना ॥ इति ।

अत्रेदं गुरुमुखैकवेद्यं रहस्यम्—निरुपाधिकपदेन केवलत्वस्य सदानन्दपूर्णपदेन धर्मविशिष्टत्वस्य कथनेन विशिष्टकेवलयोरवयवावयविनोरिवायुतसिद्धयोस्तादात्म्यरूप एव संबन्धः, न संयोगादिरूपो भेदघटितः । स च त्रिपुरसुन्दरीकामेश्वरयोर्विग्रहात्मकस्थूलरूपद्वयसंबन्धः कामेश्वराङ्कनिलयत्वपदेन व्यवह्रियमाणः शिवशक्तिसामरस्यात्मको लाक्षाद्रवपटयोरिव संयोगविशेष एवेति वासना । एवमुपाधिविनिर्मुक्तस्यैव शुद्धत्वेन स्फटिकवर्णान्तरोपरागाभावदशायामेवाभिव्यज्यमानत्वस्य शुद्धस्फटिकाभेदे एव पर्यवसितत्वेन कामेश्वरे शुक्लचरणत्ववासना । अनुसन्धानस्याहमात्मकमानसवृत्तिविशेषमात्ररूपत्वेन तद्विषयतायाः, विषयतासम्बन्धेन वृत्तेर्वा वृत्तिसम्बन्धेन मनस एव वा रागाभेदे पर्यवसानात्तद्विशिष्टाया रक्तचरणत्ववासना । सर्वस्येत्यनेन विषयताया विशेष्यविशेषणतत्सम्बन्धेषु व्याप्तिकथनाच्चरणप्रभयोः समरसभावसम्बन्धरूपमिश्रचरणस्यापि वासना सूचिता भवतीति दिक् । तन्त्रश्लोके 'गुरुराद्या भवेच्छक्तिः' इत्यादिनोक्तानां वासनानामनुसन्धानमुपास्तिपदवाच्यमिति कथनार्थश्चतुर्थचरणः । अथवोपास्तेरपि त्रीणि रूपाणि विग्रहादिरूपं स्थूलरूपम्, मानसो जपः सूक्ष्मम्, एषा भावना परं रूपमिति । न पुनरुपास्तिवासनाविभावनाविधिरिति भ्रमितव्यम् ॥ २९ ॥

## अनन्यचित्तत्वेन च सिद्धिः ॥ ३० ॥

प्रत्यावरणमेकैका सिद्धिरेकैका मुद्रा च बहिर्यागे पूज्यते तद्वासनाविधानार्थमियं श्रुतिः । अनन्यचित्तत्वेनेत्यभेदे तृतीया । चकारो मुद्रासंग्रहार्थः । तथाचोपबृंहितं तन्त्रराजे—

सिद्धिस्त्वनन्यचित्तत्वं मुद्रा वैभववासना । इति ।

## भावनायाः क्रिया उपचारः ॥ ३१ ॥

---

तत्तदावरणदेवानां स्वशरीरावयवविशेषाभेदेन भावितानामपि स्वात्मानन्यत्वेन चित्ते भावनमेव तत्तदावरणस्था सिद्धिः। एता सत्तो न भिद्यन्ते इति बुद्धिरेव सिद्धिरिति यावत्। सिद्धिपदमुपास्तिफलसिद्धिपरमिति केचित्। तत्पक्षेऽव्यवहितपूर्वोक्तभावनायां विषयतावैलक्षण्यप्रयुक्ताभेदस्यानिरासेनोपासना फलतीत्यर्थः। वस्तुतो वक्ष्यमाणतर्पणे विषयवैलक्षण्यनिरासादयं ग्रन्थः सिद्ध्यादिपर एव। तासामेव वैभवमुक्तमपरिच्छिन्नता तद्भावनमेव तत्तदावरणस्थमुद्राभावनमित्यर्थः ॥ ३० ॥

## भावनायाः क्रिया उपचारः ॥ ३१ ॥

उक्तायाः स्वात्माभेदेन ललिताभावनायाः क्रियाः पुनःपुनःकरणानि धारावाहिन्यो भावना इति यावत्। उपचारसमर्पणस्य भेदघटितत्वेन यथास्थितगन्धादिभावनापत्ते पूर्वविभावितस्य प्रमोषापत्तेस्तदविरोधिनीरेवोपचारभावनाः स्वेच्छया कल्पयेदिति भावः। तदुक्तं तन्त्रराजे—

उपचाराश्चलत्वेऽपि तन्मयत्वाप्रमत्तता। इति।

चलत्वं चाञ्चल्यमभेदभावनास्थैर्याभावः। तादृशस्वभावशीलत्वेऽपि ब्रह्ममयत्वांशे प्रमादाभावोऽतीव सावधानता यथा स्यात्तथा विभावना एवोपचार इति तदर्थः। यद्यपि चलशब्दोऽवश्यम्भाविप्रमादस्वप्नाद्यवस्थापरत्वेन मनोरमायां व्याख्यातस्तथाऽप्यपिशब्दस्वारस्येन जाग्रत्काले सावधानतामात्रावश्यकत्वपरैव सोक्तिरिति मन्तव्यम्। तादृशोऽप्रमादश्च योगवासिष्ठोक्तशिवपूजायां द्रष्टव्यः। आत्मनो विषयोपभोगजनितानन्दस्य सर्वस्य स्वात्माभेदेनानुसन्धानं प्रारब्धलब्धसुखदुःखस्यापि कर्मक्षयकारकत्वेन परिणामसुखावहत्वात्कटुकषायवस्तुकृतस्वाङ्गोद्वर्तनादेरिव भावनायाः सपर्यारूपतैवेति तत्रत्यो निष्कर्षः। 'सपर्यापर्यायस्तव भवतु यन्मे विलसितम्' इत्यादयो भगवत्पादादीनामुक्तयोऽप्यमुमेवार्थं वदन्ति। परन्त्वीदृशपूजाया अहोरात्रकालसाध्यत्वेन प्रकृतविधित्सितायाश्च भावनाया उक्तमुहूर्तादिकालनियमविधिना विरोधादन्यथैवोपचाराः प्रयोक्तव्याः। तत्प्रकारो यथा—'स्वे महिम्नि प्रतिविभावनमासनम्। 'पादोऽस्य विश्वा भूतानि' इति श्रुत्या पादरूपे वियदादिप्रपञ्चे

अस्तिभातिप्रियांशमात्रभावनारूपाभिरद्भिर्नामरूपमलक्षालनं पाद्यम्। तस्यैव सूक्ष्मप्रपञ्चस्यैकदेशविषयाध्यस्तत्वेनापि परिकल्पप्रोक्तरीत्या मलनिरासोऽर्घ्यम्। भावनारूपजलस्यापि कवलीकार आचमनम्। सत्त्वचित्त्वानन्दत्वाद्यखिलावयवाभेदेन भावनाजलसंपर्कः स्नानम्। तेष्वेवावयवेषु उक्तजलसंपर्केण प्रसक्ताया वृत्तिविषयतायाः प्रोञ्छनभावनं वस्त्रम्। निर्विषयत्वनिरञ्जनत्वाद्यनेकब्रह्मलिङ्गभूततदभिन्नधर्मविभावनमाभरणम्। स्वशरीरान्तर्गतपार्थिवनाभसवायवीयतैजसभागानां चन्द्रमण्डलस्यामृतस्य तन्मण्डलस्य च जडभागापनयपूर्वकं सच्चिदा-

---

विभाव्य अभेदसम्बन्धेन चित्त्वादिधर्मविशिष्टसंविदश्च तादात्म्यसम्बन्धरूपं कामाङ्गयन्त्रणं विशेषणं विभाव्य[1] उपाध्यभावरूपशुक्लत्वेनोपलक्षिता सती शुद्धसंविदेव शुक्लचरणः। चित्तविशिष्टसंवित्प्राथमिकपराहन्तात्मकवृत्तिरूपेण रागेणोपलक्षिता सती रक्तचरणः। अहमाकारवृत्तिनिरूपिता विषयता चरणयोर्मिथो विशेषणविशेष्यभावरूपैव तदुभयसामरस्यमिति विभाव्य हृद्रूपसर्वानन्दमयचक्रेश्वर्यै महात्रिपुरसुन्दर्यै नमः। परापररहस्ययोगिनीरूपस्वात्मात्मने प्राप्तिसिद्ध्यै नमः। अपरिच्छिन्नरूपस्वात्मात्मने योनिमुद्रायै नमः। इति तत्तत्स्थानस्पर्शपूर्वकं सम्यगनुसन्धायोपचारान् समर्पयेत्। तद्यथा—एवमपरिच्छिन्नतया[2] भाविताया[3] ललितायाः स्वे महिम्न्येव प्रतिष्ठितमासनम् अनुसन्दधामि। वियदादिस्थूलप्रपञ्चरूपपादगतस्य नामरूपात्मकमलस्य सच्चिदानन्दैकरूपत्वभावनाजलेन क्षालनं पाद्यं भावयामि। सूक्ष्मप्रपञ्चरूपहस्तगतस्य तस्य क्षालनमर्घ्यं चिन्तयामि। भावनारूपाणामपामपि कवलीकाररूपमाचमनं विभावयामि। सत्त्वचित्त्वानन्दत्वाद्यखिलावयवावच्छेदेन भावनाजलसम्पर्करूपं स्नानमनुचिन्तयामि। तेष्वेवावयवेषु प्रसक्ताया भावनात्मकवृत्तिविशेष्यतायाः प्रोञ्छनं[4] वृत्तिविषयत्वभावनेन वस्त्रं कल्पयामि। निर्विषयत्वनिरञ्जनत्वाशोकत्वामृतत्वाद्यनेकधर्मरूपाण्याभरणानि धर्म्यभेदभावनेन समर्पयामि। स्वशरीरघटकपार्थिवभागानां जडतापनयेन चिन्मात्रतावशेषरूपं गन्धं प्रयच्छामि। आकाशभागानां तथा भावनेन पुष्पाणि ददामि। वायव्यभागानां तथाभावनया धूपयामि। तैजसभागानां तथाकरणेनोद्दीपयामि। अमृतभागांस्तथा विभाव्य निवेदयामि। षोडशान्तेन्दुमण्डलस्य

---

१। विभाव्येत्यारभ्य सामरस्यमिति विभाव्येत्यन्तपाठो न पुस्तकान्तरे।

२। न्नताया इति पाठः। ३। भावनाया इति पाठः। ४। परिच्छिन्नमिति पाठः।

अहं त्वमस्ति नास्ति कर्त्तव्यमकर्त्तव्यमुपासितव्यमिति विकल्पानामात्मनि विभावनं होमः॥ ३२॥

---

नन्दमात्रावशेषेण ब्रह्ममयत्वविभावनानि गन्धादिताम्बूलान्ताः षडुपचाराः। उक्तं नित्याहृदये—

भवतीं त्वन्मयैरेव नैवेद्यादिभिरर्चयेद्॥ इति।

पञ्चभूतमयं विश्वं तन्मयी सा सनातनी॥ इति च।

प्रकृतभावनाङ्गानां पश्यन्तीत्यादिनिखिलशब्दानां स्वीयानां नादद्वारा ब्रह्मण्युपसंहारविभावना स्तोत्रम्। चित्तवृत्तीनां विषयेष्वितस्ततो धावमानानां विषयगतजड़तानिरासपूर्व्वकं ब्रह्मणि विलापनं प्रदक्षिणम्। विषयेभ्यः परावर्त्तनेन वृत्तीनां ब्रह्मैकप्रवणता नमस्कार इति।

यदपि बाह्यान्तःकरणानामेकरूपस्थितिरासनम् इति वाक्यानि मूलेष्वपि क्वचिद्दृश्यन्ते, तथापि तेषु कतिपयानामुपचाराणां प्रकृतभावनानुगुण्याभावाद्बहुषु पुस्तकेष्वनुपलम्भात्तन्त्रेषु तदुपबृंहणादर्शनाच्च तान्यस्माभिरिह नादृतानि॥ ३१॥

अहं त्वमस्ति नास्ति कर्त्तव्यमकर्त्तव्यमुपासितव्यमिति विकल्पानामात्मनि विलापनं होमः॥ ३२॥

अहमिति। सन्ति श्रीचक्रे पूर्व्वभावितेभ्योऽन्या अप्यनन्ताः शक्तयः।

अन्यास्तु शक्तयश्चक्रगामिन्यो याः समन्ततः।

तास्तु विश्वविकल्पानां कल्पनाः समुदीरिताः॥

इत्यादिना तन्त्रे वर्णिताः। तास्तु त्रिपुरसुन्दर्यभेदभावनाकलिकां होमवासना-

---

तया भावनेन ताम्बूलकल्पमाचरामि। परापश्यन्त्यादिनिखिलशब्दानां नादद्वारा ब्रह्मण्युपसंहारचिन्तनेन स्तौमि। विषयेषु धावमानानां चित्तवृत्तीनां विषयजडतानिरासेन ब्रह्मणि विलापनेन प्रदक्षिणीकरोमि। तासां विषयेभ्यः परावर्तनेन ब्रह्मैकप्रवणतया प्रणमामि। इत्युपचर्य्य जुहुयात्। विहिताविहितविषया [1] वृत्तय उत्पन्ना अहं त्वं [2] गुरुर्देवतेत्यादयस्ताः सर्व्वाश्चक्रराजस्थानन्तशक्तिकदम्बरूपास्तत्सूक्ष्मरूपा ये ये संस्काराश्च तत्सर्वं चिन्मात्रमेवेति विभावनया निर्मुल्यानं स्वात्मनि जुहोमि। प्रकृतभावनासु ये गुरुचरणादिशक्तिकदम्बान्ता

---

१। आश्रयत्वेन इत्यधिकं पुस्तकान्तरे। २। त्वमित्यधिकम्।

भावनाविषयाणामभेदभावना तर्पणम् ॥ ३३ ॥

पञ्चदशतिथिरूपेण कालस्य परिणामावलोकनम् ॥ ३४ ॥

---

माहुरहमित्यादिना। तेन नैवेद्याङ्गहोमस्य उपचाराद्बहिः पार्थक्येन कथनस्य साङ्गत्यम्। तथाच विसर्ज्जनात्मकोपचारपराख्येव अहमित्यारभ्य त्रीणि वाक्यानीति पर्य्यवसन्नम्। युष्मदस्मत्प्रत्यययोरहंत्वमित्यनेन ग्रहणम्। अस्तिनास्तीत्यनेन लौकिकयोर्विधिनिषेधयोः, कर्त्तव्यमकर्त्तव्यमित्यनेन वैदिकयोः कर्म्मकाण्डस्थयोः, उपासितव्यमित्यनेन वेदशिरःस्थविधेर्ग्रहणम्। नोपासितव्यमिति निषेधस्योपनिषत्स्वदर्शनादेव तदनुल्लेखः। एतत्सप्तकेन वृत्तिसामग्र्यमुपलक्ष्यते।

ईदृशानां विकल्पानां स्वात्मन्यस्तमयो दृढम्।

इत्युपबृंहणात्। विकल्पानां निर्य्युत्थानपूर्व्वकं तद्धेतुशक्तिकदम्बस्य देवतायां विलीनतां भावयेदिति फलितार्थः॥ ३२ ॥

## भावनाविषयाणामभेदभावना तर्पणम् ॥ ३३ ॥

श्रीगुर्व्वादिहोमान्ता यावन्तः पदार्था इह भाविता एव भविष्यन्ति तेषां सर्व्वेषामपि परस्पराभेदभावनेन विषयतावैलक्षण्यप्रयुक्तभेदभावनस्यापि निगरणेन निर्विकल्पतुरीयाखण्डविषयतामापाद्य तस्या अपि त्यागेन स्वात्ममात्रावशेषस्तर्पणवासना। यद्यपि

ताम्बूलमर्च्चना स्तोत्रं तर्पणञ्च नमस्क्रिया।

इति परिगणितमुपचारान्तरमेव तर्पणम्, तथापि तदङ्गावरणदेवतोपचाररूपत्वाद्विसर्ज्जनैकदेश एव। तर्पणभावननिरोधकत्वात्तर्पणताऽपि।

एषामन्योऽन्यसम्भेदभावनं तर्पणं स्मृतम्।

इति तन्त्रराजे एषामित्यस्य न्यासजपहोमानामिति सङ्कुचितं निधिज्ञतं व्याख्यानं श्रुतिविरोधादनादेयम्॥ ३३ ॥

एतावता प्रबन्धेन देहरूपश्रीचक्रस्य स्वात्ममात्रावशेषतामुक्त्वा तेन सह बहिरङ्गसम्बन्धशालिनः प्रपञ्चस्यापि स्वात्मनि विलापनमाह—

## पञ्चदशतिथिरूपेण कालस्य परिणामावलोकनम् ॥ ३४ ॥

---

विषयास्ते सर्वेऽपि चिन्मात्ररूपा न परस्परं भिद्यन्त इति भावनया तर्पयामि। तिथिचक्रमुक्तरूपं कालचक्रं देशचक्रं च सर्व्वमस्ति भाति प्रियञ्च न तु नामरूपवद्

स च प्रपञ्चस्त्रिविधः—कालरूपो देशरूप उभयरूपश्चेति। तत्राद्यो यथा—चन्द्रमण्डलनिष्ठसादाख्यकलातिरिक्ता 'दर्शा दृष्टा दर्शता' (तै० ब्रा० ३-१०-१) इत्यादिश्रुतिपरिगणिताः पञ्चदश कलास्सन्ति ता एव प्रतिपदादिपूर्णिमान्तास्तिथयः। तिथिरूपास्ता एव च कामेश्वर्यादिचित्रान्तनित्याभिरभिन्नाः। सादैव तु ललिता। ईदृशस्य च नित्यं परिवर्त्तमानस्य कालरूपतिथिचक्रस्यान्तरेव श्रीचक्रं तिष्ठति न बहिः। द्वितीयो यथा—भूगोलस्योत्तरभागे स्थितो मेरुस्तद्दक्षिणतो जम्बूप्लक्षशाल्मलिकुशक्रौञ्चशाकपुष्कराख्यास्सप्त द्वीपाः। तेषामन्तरालेषु भूगोलस्य वलयाकारा लवणेक्षुसुरासर्पिर्मधुक्षीराख्यास्समुद्राः पुष्कराद्बहिर्मधुरोदस्समुद्रस्सप्तमः। ततोऽपि दक्षिणतः परं व्योमेत्येवं षोडश देवताः। तेषु मेर्वादिव्योमान्तेषु क्रमेण ललितादिचित्रान्ताः क्रमेण नित्या युगप्रथमवर्षे तिष्ठन्ति। द्वितीये तु वर्षे जम्बूद्वीपादिमेर्वन्तेषु गच्छन्ति। तृतीये तु लवणसागरादिजम्बूद्वीपान्तेषु इत्यादिरीत्या षोड़शवर्षे परमव्योमादिमधुरससुद्रान्तदेशेषु ललिताद्याः षोड़श नित्यास्तिष्ठन्ति। एवं षोड़शभिः षोड़शभिर्वर्षैर्नित्यानामेकैका परिवृत्तिः। ईदृशदेशरूपचक्रस्याप्यन्तरेव श्रीचक्रं न बहिः। तृतीयो यथा - भूगोलस्योपर्यधश्च वलयिताश्चन्द्रबुधशुक्ररविभौमगुरुशनिनक्षत्रकक्ष्यास्तत्तदन्तरालान्यष्टाविति षोड़श देशाः कालचक्ररूपास्सन्ति। तेषु स्थानेषु देशपरिवृत्तिविपरिवृत्तिक्रमतः षोड़श नित्याः परिवर्त्तन्ते। अस्यापि चक्रस्यान्तरेव श्रीचक्रं न बहिः। अस्य त्रिविधस्यापि चक्रस्य पारमार्थिकरूपं नित्याचक्रमेव ब्रह्मातिरिक्तस्य सर्वस्य देशकालावच्छिन्नतद्भेदात्सर्वोऽपि नित्यारूप एव। तासां स्वात्माभेदभावनैव ह्यत्र विधीयते।

अथ षोड़शनित्यानां स्वात्मत्वे भावनां शृणु।
यदा तन्मयता सिद्धा प्रत्यक्षा भवति ध्रुवम्॥

इत्युपक्रम्य 'गुरुराद्या भवेच्छक्तिः' इत्यादिना ललितायाः साङ्गोपाङ्गायाः स्वात्मत्ववासनामुक्त्वा अन्ते—

तिथिरूपेण कालस्य परिणामावलोकनम्।
नित्याः पञ्चदशैताः स्युरिति प्रोक्तास्तु वासनाः॥

इत्युपसंहारस्य तन्त्रराजे दर्शनात्। सा च प्रपञ्चोपसंहारफलिकैव। तिथिरूपेणेति त्रिविधचक्रोपलक्षणद्वारा प्रपञ्चपरम्। प्रपञ्चात्मकतया काल एव परिणतो-

---

अतः सर्वं ब्रह्मैवेति विभावयामि। अथवा पूर्व्वलिखितां नित्याभावनामिहैव

एवं मुहूर्त्तत्रितयं मुहूर्त्तद्वितयं मुहूर्त्तमात्रं वा भावनापरो जीवन्मुक्तो भवति स एव शिवयोगीति गद्यते ॥ ३५ ॥

---

ऽस्तीति विभावनमिवान्यासां पञ्चदशनित्यानां विभावनमित्यर्थः। तासां त्रिपुरसुन्दर्य्यभेदस्य क्लृप्तत्वात्तदनुसृत्य भावनाविषयपदेनोक्तानां वक्ष्यमाणानां क्रोडीकारेण पूर्व्ववाक्य एवाभेदभावनाया विहितत्वाद्वा।

वस्तुतस्तु सर्वा अपि शक्तयः षट्शताधिकविंशतिसहस्रसंख्याः श्वासात्मककालरूपाः। तत्समष्टिविग्रहवती ललिता। अन्याः पञ्चदश व्यष्टिवेषेण प्रत्येकं चत्वारिंशदधिकचतुर्द्दशशतश्वासरूपा भवन्ति। तास्तथा विभावयेदित्यर्थः। एतत्पक्षद्वयभावनाऽऽवरणपूजातः परा कार्येति केचित्। बाह्यपूजायां तथैव स्थानक्लृप्तेः सर्व्वविलापोत्तरं भावनान्तरानवकाशादिति तदाशयः। वस्तुतस्तु स्वात्ममात्रपरत्वेन मनसः स्तम्भे सति श्वासस्तम्भस्यावश्यम्भावाद्देवताया रश्मिविलापनस्य विसर्ज्जनकाल एवोचितत्वान्मनःपवनोभयस्तम्भनस्योत्तरत्वकालस्य विधायिहैवावसरसद्भावान्निरर्थकवाक्यापकर्षस्यायुक्तत्वाच्चेहैव नित्या युक्तेति द्रष्टव्यम् ॥ ३४ ॥

एवमान्तरबाह्यनिखिलप्रपञ्चविलापनपूर्व्वकस्वात्ममात्रावशेषभावनाया अहर्निशं धारावाहिकतावश्यकतां ध्वनयन् तदशक्तेषूत्तममध्यमाधमसाधकभेदेन त्रिविधं कालनियममाह—

एवं मुहूर्त्तत्रितयं मुहूर्त्तद्वितयं मुहूर्त्तमात्रं वा भावनापरो जीवन्मुक्तो भवति स एव शिवयोगीति गद्यते ॥ ३५ ॥

एवमित्यनेन अव्यवहितपूर्व्वोक्ता स्वात्ममात्रविषयिणी श्वासस्तम्भनसहिता निर्विकल्पवृत्तिरुच्यते। तद्विन्नभावनायां परस्तदेकासक्तः भावनेतरव्यापारशून्यः, धारावाहिकभावनावानिति यावत्। स जीवन्मुक्तिरूपफलभागी अचिरादेव जायते। जैगीषव्यादयः शिवयोगित्वेन ये व्यवह्रियन्ते तेऽप्येताट्टशभावनाशालित्वादेवेति तत्पदप्रवृत्तिनिमित्तमीदृशभावनेत्यर्थः। वेदत्रयं बहिरङ्गकर्म्मप्रतिपादकम्। अथर्ववेदस्तु अन्तरङ्गकर्म्माण्येव प्रचुरं प्रतिपादयति तस्यापि शिरोरूपेयमुपनिषत्तु ततोऽप्यन्तरङ्गतमां भावनां वक्ति ॥ ३५ ॥

---

श्वासविलापनफलिकां कुर्य्यात्। तेन मनःपवनात्मनामैक्यनिफालनेन त्रीन् मुहूर्त्तान् द्वावेकं मुहूर्त्तमवच्छिन्नं यापयेत्[1]। ततोऽवतीर्य्य प्राणायामत्रयं ऋष्यादि-

---

१। धारयेदिति पाठः।

कादिमतेनान्तश्चक्रभावनाः प्रतिपादिताः ॥ ३६॥
य एवं वेद सोऽथर्वशिरोऽधीते ॥ ३७ ॥

---

कादिमतेनान्तश्चक्रभावनाः प्रतिपादिताः ॥ ३६ ॥
य एवं वेद सोऽथर्वशिरोऽधीते ॥ ३७ ॥

अस्यां या अन्तश्चक्रभावनाः कथितास्ताः कादिनामकशक्तिमतरीत्यैव न तु कौलमतेन। अस्या उपनिषद ईदृशभावनाप्रतिपादकत्वमिति पदशो वाक्यशश्च यो वेद स एवाथर्वशिरोऽध्ययनवान्। अध्ययनकरणकभावनाया अर्थावधिभाव्यकत्वाद् इति भावः। 'योऽर्थज्ञ इत् सकलं भद्रमश्नुते' इति श्रुत्यन्तरे सकलपदस्वारस्यात्तु शब्दमात्रपाठादपि किञ्चिद्भद्रमस्त्येवेति लभ्यत इति शिवम्।

इति भावनोपनिषदोऽथर्वणशिरसोऽतनोद्भाष्यम्।
भास्कररायो विदुषां तुष्ट्यै जीवन्मुमुक्षूणाम् ॥ ३६।३७ ॥

समाप्तम्।

---

न्यासत्रयञ्च कृत्वा गुरुं स्तुवीतेति सर्वं शिवम्।

अथर्वशिरसि प्रोक्तभावनानां सतां मुदे।
इति भास्कररायेण प्रयोगविधिरीरितः ॥

भावनोपनिषत्प्रयोगविधिः समाप्तः।

# अथ भावनोपनिषद्भाष्यम् ।

---

ओं श्रीकृष्णाय परमात्मने नमः ।

ओ३म् । श्रीचक्राराधनं स्थूलं निन्द्यते भावनान्तरात् ।
यस्यां व्याख्यास्यते सेयं भावनोपनिषन्मया ॥

अत्र खलु परमकारणभूता शक्तिः श्रीगुर्व्वनन्येति नवशक्तिमयं श्रीचक्रं नवरन्ध्ररूपदेहानन्यदिति चैवमादिनिरूपणैरन्यथाभावनारूपं श्रीचक्रोपासनक्रममविज्ञायानया चोपनिषदा स्थूलं बाह्यं च श्रीचक्रोपासनमेवाभिहितमिति "बिन्दुत्रिकोण"-इत्यादिश्लोकानुरोधेन केचिच्छ्रीचक्रं विलिख्योपासते ते तु मन्दबुद्धयोऽनाघ्राताध्यात्मशास्त्रा इह विद्वद्भिः सुतरामुपेक्षणीया एव भवन्ति । कुतः, औपनिषदश्रीचक्रपूजनप्रकारानभिज्ञत्वात् । अत्र हि 'ज्ञातृज्ञानज्ञेयानामभेदभावनं श्रीचक्रपूजनम्' ( भा० उ० वा० १० ) इति कण्ठरवेणाभिहितम् । एवं विस्पष्टमभिहितमपि भावनात्मकं पूजनमकुर्व्वन्तो दुर्बलप्रमाणान्तराश्रयणेन घुणवद्विलिख्य काम्यार्थमोहसमुद्रे स्वयं मज्जन्तोऽन्यान्मज्जयन्तश्च बहवो वृथायुषो भवन्ति । यद्यत्र ब्राह्म्याद्या अष्ट शक्तयः षो श शक्तयश्च कामादिभ्यः पृथिव्यादिभ्यश्चान्या उक्ताः, तदा तद्बाह्यस्थूलश्रीचक्रोपासनमुपनिषत्प्रमाणकमिति तत् कर्त्तुमर्हन्ति, न तु तथोक्ताः । न चाभ्यन्तरं सगुणदेवताभावनात्मकाराधनमिहोपवर्ण्यते, येन तदवगत्यर्थकमिदं प्रतीकोपासनमित्युच्येत । आध्यात्मिकतत्त्वपरिवारोपितत्वाभिधानात्तु

देहो देवालयः प्रोक्तो जीवो देवः सदाशिवः ।
त्यजेदज्ञाननिर्माल्यं सोऽहंभावेन पूजयेद् ॥

इत्युक्तप्रकारकपूजनमेव विवक्षितमवगम्यते । अत्रैवं सति सगुणमूर्त्तिध्यानात्मकोपासनस्याप्यनवकाशात्के मुतिकन्यायेनैव रेखामेर्व्वादिमयस्य श्रीचक्रप्रतीकोपासनस्यानवकाश इति स्थितम् । केचिच्चैतत्प्रतीकोपासकाः स्वेषां प्रबलं मन्त्रशास्त्रप्रावीण्यं मत्वा कृतार्थतां मन्यन्ते । न तु ते

उत्तमा तत्त्वचिन्ता स्यान्मध्यमं शास्त्रचिन्तनम्।
अधमा मन्त्रचिन्ता स्यात्तीर्थभ्रान्त्यधमाधमा॥

इति श्रुत्यन्तरं जानन्ति। ननु नवरन्ध्ररूपो देहो नवशक्तिमयं श्रीचक्रमित्यादिषु देहाद्यनन्यत्वं श्रीचक्रादीनां भावनीयमित्युक्तं न तथा वाच्यम्, श्रीचक्राद्यनन्यत्वस्यैव देहादीनां भावनीयत्वाभिप्रायादिति चेन्न। ज्ञात्राद्यभेदभावनं श्रीचक्रपूजनमित्यनेन स्पष्टवाक्येन श्रीचक्रादिषु देहादिबुद्धेः कर्त्तव्यतावगमात्। यदि देहादिषु श्रीचक्रादिबुद्धेः कर्त्तव्यतोपदिश्येत तदा पूजनस्यैव मुख्यत्वापत्त्या भावनोपनिषदित्यस्याः संज्ञाऽनुपपन्नैव भवेत्। न चाभ्यन्तरभावनामपेक्ष्य बाह्यतरं पूजनं श्लाघ्यमिति कोऽपि ब्रूयात्। यद्यपि देवीविषयकमन्त्रजपमात्रवान्यदा कदा वा तदर्थविचारद्वारोक्तप्रकारकतत्त्वभावनया निष्कामः क्रमेण मुक्तिपदं प्राप्नुयात्, श्रीचक्रादियन्त्राराधनवांस्तु सकामो न कदाऽपि मुक्तिपदार्हो भवितुमर्हति। अस्य सर्व्वदा बहिर्मुखत्वात्। ननु "अव्यक्तमहदहङ्काराः कामेश्वरीवज्रेश्वरीभगमालिन्योऽन्तस्त्रिकोणगा देवताः" (भ० उ० वा० २८) इत्युक्तम् अव्यक्तादीनि तु सर्व्वाणि तत्त्वानि परमार्थपरतत्त्वप्राप्त्यर्थमपलापनीयानीति वेदान्ताभिमतम्, एवं सति उक्तदेवतात्रयस्याव्यक्तादिरूपेणावस्थितिं विना विनाशो हि भवेत्। न किमेवं देवताविनाशकर्त्ता प्रत्यवायी स्यादिति चेन्न। सर्व्वदेवताधिष्ठानभूतायाः कामेश्वर्या अपि सदानन्दघनपूर्णरूपैकीकरणस्य विहितत्वात्। सर्व्वगतामूर्त्तस्वरूपभावनां विना यन्त्रे मूर्त्तदेवतां भावयन् हि प्रत्यवायी भवेत्। ननूक्तप्रकारकावाहनासनार्घ्यपाद्याचमनीयस्नानवस्त्राद्युपचारैर्बाह्यश्रीचक्राराधनं विना भावनामात्रेण कस्यचिदपीन्द्रियाणि विषयव्यापारविमुखानि भवितुमर्हन्ति।

नैव कश्चित्क्षणमपि जातु तिष्ठत्यकर्म्मकृत्।

इति स्मरणात्। नापि परतत्त्वज्ञानानधिकारत्वेन मन्दानामपि यन्त्राराधकानां तदाराधनाविश्वासजनकोक्तप्रकारकभावनोपदेशो युक्तः।

न बुद्धिभेदं जनयेदज्ञानां कर्म्मसङ्गिनाम्।

इति स्मरणात्। तस्मादियमुपनिषत्सर्व्वानर्थकारित्वादुपेक्षणीयैवेति। अत्रोच्यते। यन्त्राराधका हि लोके स्वाराधनोत्तमप्रमाणान्वेषणपरा एतदुपनिषत्पुस्तकमादाय महतां मुखेभ्योऽर्थशुश्रूषवः प्रार्थयन्ते तेषां यथार्थोपदेशेन बुद्धिभेदः स्याच्चेत् तदा श्रुतेरुपदेष्टृणां वा को न्वपराधः। न च भावनामात्रेणेन्द्रियाणां विषयव्यापारवैमुख्यं न स्यादिति वाच्यम्। भावनाकर्त्तरां बुद्धौ सर्वेषामिन्द्रियाणां लीयमानत्वात्। उक्तप्रकारभावनारहितो हि क्षणमपि अकर्म्मकृन्न तिष्ठतीति स्मृतेः, अतोऽनयोप-

निषदा न स्मृत्युपरोधः। न च बाह्याराधनमुपमृद्य देव्याः सगुणमूर्त्तभावनैवेह प्रतिपिपादयिषितेति वाच्यम्। चिदग्निस्वरूपपरमानन्दशक्तिस्फुरणं वस्त्रमिति स्वव्यतिरिक्तवस्तुसङ्गरहितस्मरणं विभूषणमिति चैवमसङ्गचिद्रूपनिर्गुणब्रह्मभावमाया एव प्रक्रान्तत्वात्। अवस्थात्रयैकीकरणात्मकताम्बूलेन तुरीयावस्थात्मकनमस्कारेण च निर्गुणब्रह्मभावनैव प्रक्रान्ता भवति। यद्यपि मूलाधारादाब्रह्मरन्ध्रपर्यन्तमित्याद्युक्तलक्षणप्रदक्षिणेन व्यष्टितत्त्वभावनैव प्रक्रान्ता, न त्वखण्डबोधानन्दलक्षणसमष्टितत्त्वभावनेत्याशङ्कीत। न तु सोपपद्यते। कुतः, देहशून्यप्रमातृतानिमज्जनं बलिहरणमिति देहशून्यत्वेन भावनया प्रमातृतायाः स्वरूपे समष्टिचैतन्ये निमग्नत्वात्। समष्टिमूलाधारब्रह्मरन्ध्रयोरीश्वरयोर्विवक्षितत्वोपपत्तेश्च। तस्मात्सर्व्वगतब्रह्मभावनैव प्रक्रान्तेति। तर्हि बलिहरणानन्तरकार्यो होमः कीदृश इत्यत आह नित्येति। नित्यात्मविलापनं नित्यस्य कूटस्थघटाकाशस्थानीयस्य आत्मनः परस्मिन्महाकाशस्थानीयचिन्मात्रात्मनि विलापनं होम इति। आर्द्रांज्वलन्तीमित्यत्र माञ्जुहोमिस्वाहेति नित्यात्मनो होमद्रव्यता श्रवणात्। परिपूर्णध्यानमेव तत्पादुकानिमज्जनमित्येवं मुहूर्तत्रयं भावयतो देवताया आत्मना सहैक्यं सिध्यति। तथा च श्रुत्यन्तरं 'त्वं वाऽहमस्मि भगवो देवतेऽहं वै त्वमसी' ति। एवं प्रत्यक्षैक्यपर्यवसन्नामिमां भावनोपनिषदं बाह्यश्रीचक्राराधनाधारभूतां मन्यमानानां पण्डितत्वं को नु ब्रूयात्॥ नच चिन्तितकार्यसिध्यभिधानात्सगुणोपासनमेवात्रोक्तं स्यादिति शङ्क्यम्। निर्गुणोपासकानामपि मोक्षकार्यसिद्धेः। तस्मात्सर्वमनवद्यमवगन्तव्यम्।

इति सुन्दरेश्वरतातपादशिष्याप्पयदीक्षितविरचितोपनिषद्भाष्ये

भावनोपनिषद्भाष्यं समाप्तम्।

---

॥ श्रीः ॥

# बह्वृचोपनिषत् ।

[1]बह्वृचाख्यब्रह्मविद्यामहाखण्डार्थवैभवम् ।
अखण्डानन्दसाम्राज्यं रामचन्द्रपदं भजे ॥

ॐ इम् वाङ्मे मनसीति शान्तिः ।

देवी ह्येकाऽग्र एवासीत् । सैव जगदण्डमसृजत् । कामकलेति विज्ञायते । शृङ्गारकलेति विज्ञायते । तस्या एव ब्रह्मा अजीजनत् । विष्णुरजीजनत् । रुद्रोऽजीजनत् । सर्वे मरुद्गणा अजीजनन् । गन्धर्वाप्सरसः किन्नरा वादित्रवादिनः समन्तादजीजनन् । भोग्यमजीजनत् । सर्वमजीजनत् । सर्वं शाक्तमजीजनत् । अण्डजं स्वेदजमुद्भिज्जं जरायुजं यत्किञ्चैतत् प्राणि स्थावरजङ्गमं मनुष्यमजीजनत् ।

सैषा परा शक्तिः । सैषा शाम्भवी विद्या कादिविद्येति वा हादिविद्येति वा सादिविद्येति वा । रहस्यमोमोंवाचि प्रतिष्ठा । [2]सैव पुरत्रयं शरीरत्रयं व्याप्य बहिरन्तरवभासयन्ती देशकालवस्त्वन्तरसङ्गान्महात्रिपुरसुन्दरी वै प्रत्यक्चितिः । सैवात्मा ततोऽन्यदसत्यमनात्मा । अत एषा ब्रह्मसंवित्तिर्भावाभावकलाविनिर्मुक्ता चिद्विद्याऽद्वितीयब्रह्मसंवित्तिः सच्चिदानन्दलहरी महात्रिपुरसुन्दरी बहिरन्तरनुप्रविश्य स्वयमेकैव विभाति । यदस्ति सन्मात्रम् । यद्विभाति चिन्मात्रम् । यत्प्रियमानन्दं तदेतत्सर्वाकारा महात्रिपुरसुन्दरी । त्वं चाहञ्च सर्वं विश्वं सर्वदेवता । इतरत्सर्वं महात्रिपुरसुन्दरी सत्यमेकं ललिताख्यं वस्तु तदद्वितीयमखण्डार्थं परं ब्रह्म ।

पञ्चरूपपरित्यागादस्वरूपप्रहाणतः ।

अधिष्ठानं परं तत्त्वमेकं सच्छिष्यते महत् ॥ इति ।

"प्रज्ञानं ब्रह्म" इति वा "अहं ब्रह्मास्मि" इति वा भाष्यते ।
"तत्त्वमसि" इत्येव सम्भाष्यते । "अयमात्मा ब्रह्म" इति वा
'ब्रह्मैवाहमस्मि' इति वा 'योऽहमस्मि' इति वा 'सोऽहमस्मि'

---

बह्वृचोपनिषद्भाष्यम् ।

यस्यां देवी महावाक्यैश्चतुर्भिर्भाष्यते परा ।

बह्वृचाख्योपनिषदं व्याख्यास्ये तां द्विलिङ्गकाम् ॥

देवीति । अग्रे प्राग्जगदुत्पत्तेर्देवी सगुणनिर्गुणोभयात्मिका एका ह्यद्वितीया आसीत् । सैव जगदण्डम् अण्डाकारमिदं जगद् आकाशादिपञ्चीकरणद्वारेणासृजत् ससर्ज । सैव सगुणांशेन कामकलेति शृङ्गारकलेति च विज्ञायते । तस्या एव सकाशाद्ब्रह्मा चतुर्मुखोऽजीजनज्जातः । विष्णुरुद्रमरुद्गणाश्चाजीजनन् । गन्धर्वादिकञ्च सर्वं तस्या एवाजीजनत् । सैषा परा शक्तिर्ब्रह्मविष्णुरुद्रेभ्योऽपि तस्या अधिकत्वेन तुरीयतया स्वप्रधानत्वात् परत्वोपपत्तिः । ननु त्रिमूर्त्त्युत्तीर्णत्वं निर्गुणस्यैव स्यान्न तु सगुणस्य यदि सगुणस्य च स्यात्तत्रापि शिवस्यैव न तु देव्या इति चेन्न । ब्रह्मविष्णुरुद्रेश्वरसदाशिवाख्यैः प्रसिद्धैः पञ्चदेवैस्तुर्यातीतस्यापि सगुणत्वावगमात्तत्र सदाशिवस्यापि परशक्त्यधीनस्वसत्ताकत्वाच्च । तथाहि ब्रह्मविष्णुरुद्रेश्वरसदाशिवानां पञ्चानामपि देवानां वाणीरमोमोसमनोन्मनीसंज्ञाभिः शक्तिभिस्समेतानामेव मूर्त्तिमत्त्वं जगद्व्यापाराद्यधिकृतत्वं च सिध्यति । अन्यथा निर्गुणब्रह्मस्वरूपमात्रत्वसिद्धेः । तस्मात्परा शक्तिरेव सर्वकारणस्वरूपिणीति । सैषा परा शक्तिरेव शाम्भवी शम्भुसम्बन्धिनी सगुणा निर्गुणा वा विद्या स्यात् । कएईलह्रीमित्युक्तप्रथमपादार्थत्वात् कादिविद्येति वा हसकलह्रीमित्युक्तद्वितीयपादार्थत्वाद्धादिविद्येति वा सकलह्रीमित्युक्तत्तृतीयपादार्थत्वात्सादिविद्येति वा या भाष्यते सैषा पञ्चदशाक्षरी श्रीविद्यैव शाम्भवीति तस्या ॐवाचि ओङ्कारवचने प्रतिष्ठेति यत्तद्रहस्यमों सत्यमित्यर्थः । सैव परा शक्तिरभ्युदयार्थिभिर्मूर्त्त्यात्मतयो-

---

१ अयं श्लोकोऽधिकः पुस्तकान्तरे ।

२ इत आरभ्य शिष्यते महदितीत्यन्तः पाठोऽधिकः पुस्तकान्तरे ।

इति वा 'योऽसौ सोऽहमस्मि' इति वा या भाव्यते सैषा षोडशी श्रीविद्या पञ्चदशाक्षरी श्रीमहात्रिपुरसुन्दरी बालाऽम्बिकेति वा सकलेति वा मातङ्गीति स्वयम्वरकल्याणीति भुवनेश्वरीति चामुण्डेति चण्डेति वाराहीति तिरस्करिणीति राजमातङ्गीति वा शुकश्यामलेति वा लघुश्यामलेति वा अश्वारूढेति वा प्रत्यङ्गिरा धूमावती सावित्री गायत्री सरस्वती ब्रह्मानन्दकलेति। ऋचः अक्षरे परमे व्योमन्। यस्मिन्देवा अधि विश्वे निषेदुः। यस्तन्न वेद किमृचा करिष्यति। य इत्तद्विदुस्त इमे समासते। इत्युपनिषत्। वाङ्मे मनसीति शान्तिः।

समाप्तेयं बह्वृचोपनिषत्।

---

पास्यमानाऽपि निःश्रेयसार्थिभिरमूर्त्तचैतन्यात्मतयोपास्यमानत्वात्। "प्रज्ञानं ब्रह्म" इति "अहं ब्रह्मास्मि" इति "तत्त्वमसि" इति "अयमात्मा ब्रह्म" इति च सम्भाष्यते। अस्य महावाक्यचतुष्टयस्य रहस्योपनिषदि प्रातिलोम्येन वर्णितार्थत्वादलमतिप्रपञ्चेन। नन्वहमस्मि इति योऽहमस्मीति सोऽहमस्मीति योऽसौ सोऽहमस्मीति यद्वाक्यचतुष्टयमुच्यते अस्य पूर्वोक्तप्रज्ञानंब्रह्मेत्यादिवाक्यचतुष्टयार्थाविलक्षणत्वात्पुनरुक्तिदोषप्रसङ्ग इति चेदत्रोच्यते। न ह्यस्य पूर्ववाक्यार्थाविलक्षणत्वं शक्यं सम्भावयितुम्। पूर्ववाक्यानां प्रातिलोम्येनाधिकारिसम्बन्धविषयप्रयोजनार्थत्वादपरवाक्यानां विषयमात्रार्थत्वाच्च।

यत्त्वहंब्रह्मास्मीत्यभ्यासविषयवाक्यमुक्तं तस्यावृत्तिसूचकमपरमिदं वाक्यचतुष्टयं भवितुमर्हतीत्येवं वैलक्षण्यमवगन्तव्यम्। यथा च "प्रज्ञानं ब्रह्म" इत्यादिवाक्यानां पूर्वपूर्वसाध्यत्वेन उत्तरोत्तरसाधनत्वमस्ति तथाहमस्मीत्यादिवाक्यानामपि वक्तुं युक्तम्। आद्यस्य निदिध्यासनाभ्यासरूपत्वाद्द्वितीयस्य मननाभ्यासरूपत्वात्तृतीयस्य श्रवणाभ्यासरूपत्वाच्चतुर्थस्य दर्शनाभ्यासरूपत्वाच्च। दर्शनश्रवणमनननिदिध्यासनानामुत्तरोत्तरसाध्यत्वेन पूर्वपूर्वसाधनत्वं सर्वत्रावोचाम। तस्मात्सर्वमनवद्यमिति। येवं महावाक्यैर्मुमुक्षुभिर्भाव्यते सैषा निर्गुणब्रह्मचैतन्य-

स्वरूपिणी पराशक्तिर्व्यवहारदशायां प्रणवेन सह षोडशी श्रीविद्या कादिपञ्चदशा-क्षरी महात्रिपुरसुन्दरीत्यादिसगुणनामभिरभिधीयमानाभ्युदयार्थिभिरुपास्यमाना भवति।

ननु निःश्रेयसाभ्युदययोस्तमःप्रकाशयोरिवेतरेतरविरुद्धत्वं सर्व्वशास्त्रप्रसिद्धम्। निःश्रेयसस्य ज्ञानिविषयत्वादभ्युदयस्याज्ञानिविषयत्वाच्च। अस्यां ह्युपनिषदि निःश्रेयसार्थकं निर्गुणोपासनमभ्युदयार्थकं सगुणोपासनमभिहितं दृश्यते। न चात्रैकवाक्यतोपपद्यते। "प्रज्ञानं ब्रह्म" इत्यादिमहावाक्यानां सगुणब्रह्मपरत्व-कल्पनानौचित्यात्। महात्रिपुरसुन्दरीत्यादिशब्दानां निर्गुणब्रह्मपरत्वकल्पना-नौचित्याच्च। तस्माद्विरुद्धमेवैतदुपपादनमिति।

अत्रोच्यते नायं विरोधः। अत्रैकवाक्यताया अनावश्यकत्वात्। निःश्रेयसाभ्युदयाख्योभयफलसिद्ध्यर्थकसगुणनिर्गुणसमुच्चयोपासनविषया ह्रीयमुप-निषन्मध्यमाधिकारिणमपेक्ष्य प्रवृत्ताऽस्ति। मन्दाधिकारिणः सगुणमात्रोपासक-त्वादुत्तमाधिकारिणो निर्गुणमात्रोपासकत्वाच्च। सगुणनिर्गुणयोश्च तमः प्रकाशयोरिव विरुद्धत्वकल्पनमपि उत्तमाधिकारिदृष्ट्यैव भवितुमर्हति न तु मध्य-माधिकारिदृष्ट्या। समुच्चयोपासनफलभूतनिःश्रेयसाभ्युदययोः सामानाधिकरण्यं च परमेश्वरनियमिताधिकारवत्सु ब्रह्मविष्णुरुद्रेन्द्रादिषु श्रूयते एव। न चाधिकारि-व्यतिरिक्तेष्वप्युभयफलसिद्धिरिति शक्यं सम्भावयितुम्। समुच्चयोपासनसिद्धावपि फलसमुच्चयासिद्धेः। तस्मादधिकारिभेदेनोभयलिङ्गतया प्रवृत्तायामस्यामुपनिषदि न कश्चिदपि विरोध इति। इदानीं शब्दब्रह्मविदुषः परब्रह्मवेदनाभावे परम-प्रयोजनाभावम् "ऋच" इत्यादिना दर्शयन्नुपनिषदमुपसंहरति ऋच इति। ऋचः ऋगादिवेदमन्त्राः विश्वे सर्वे देवाश्च अक्षरे अविनाशिनि परमे सर्वोत्कृष्टे यस्मिन् व्योमन् व्योमनि चिदाकाशेऽधिनिषेदुरध्यवसन्। चिदाकाशात्मक-निर्गुणपरब्रह्मणस्सकलवेददेवाधिष्ठानत्वे सति कैमुतिकन्यायेन नरतिर्य्यगाद्य-शेषप्रपञ्चाधिष्ठानत्वोपपत्तेः। तदक्षरत्वादिलक्षणं परं ब्रह्म यो न वेद न विदित-वान् स ब्रह्मात्मैक्यविज्ञानहीन ऋचा वेदेन शब्दब्रह्ममात्राध्ययनेनेत्यर्थः। किं प्रयोजनं करिष्यति।

शब्दब्रह्मणि निष्णातो न निष्णायात्परे यदि।
श्रमः श्रमफलं तस्य ह्यधेनुमिव रक्षतः॥

इति परब्रह्मज्ञानहीनस्याधीतशब्दब्रह्मणोऽपि श्रममात्रफलत्वश्रवणात्। ये पुन-

स्तत्परब्रह्म इत् इत्थं पूर्वोक्तप्रकारेण विदुर्विदितवन्तस्त इमे वर्त्तमाना जीवन्मुक्ता एव समासते परब्रह्मणि सम्यगासीना भवन्तीत्यर्थः ।

अयं भावः—लोके अधीतसमस्तवेदमन्त्रोऽपि पुरुषस्तत्परमतात्पर्य्यभूतपर-ब्रह्मात्मैक्यापरोक्षज्ञानानुभवहीनश्चेत्तदा तदध्ययनश्रमश्चित्तशुद्धिमात्रप्रयोजनो भवेत् न तु सद्योमुक्तिप्रयोजन इति ।

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्य्यकृतौ

बह्वृचोपनिषद्भाष्यं समाप्तम् ।

॥ शिवम् ॥

---

श्रीश्रीभगवत्यै नमः॥

# अरुणोपनिषत्।

## इमा नुकं भुवना सीषधेम॥

अस्यार्थः—पृश्नयो नाम मुनयः परस्परं सङ्गिरन्ते। इमा इमां चक्रविद्यां। नुकं वितर्के। भुवना भुवनानि। सीषधेम अवगच्छाम। चक्रविद्यामुपाश्रित्यैव भुवनान्यवतिष्ठन्त इति वितर्कयाम इत्यर्थः। यद्वा—इमां चक्रविद्यां भुवना भुवनात्मतया सीषधेम। नुकं पृच्छायां। 'नु पृच्छायां वितर्के च' इत्यमरः॥

## इन्द्रश्च विश्वे च देवाः॥

अस्य वाक्यस्यार्थः स्पष्ट एव। चक्रविद्यामुपाश्रित्यैव आसत इति शेषः॥

## यज्ञञ्च नस्तन्वञ्च प्रजाञ्च।
## आदित्यैरिन्द्रः सह सीषधातु॥

अस्यार्थः—यज्ञमग्निष्टोमादिकं नः अस्माकं तन्वं तनूं शरीराद्धं पत्नीमिति यावत्। प्रजां सन्तानं। चकारात् सर्व्वाः सम्पदः। आदित्यैः मरुद्गणैः सह इन्द्रः चक्रविद्योपासनात् प्राप्तपरमैश्वर्य्यः इन्द्रः चक्रविद्यामस्माकमुपदिश्य सीषधातु सम्पादितवान्। प्राप्तकाले लोट्॥

## आदित्यैरिन्द्रः सगणो मरुद्भिः।
## अस्माकं भूत्ववविता तनूनाम्॥

मन्त्रद्वयस्यार्थः—तनूनां पुत्रमित्रकलत्रादीनां अविता रक्षकः भूतु भवतीत्यर्थः। इन्द्र एवास्माकं योगक्षेमसम्पादक इति भावः॥

## आप्लवस्व प्रप्लवस्व॥

पृश्नयश्चक्रविद्यां प्रस्तुवन्ति। आपादमस्तकं प्लवनं अमृतनिष्यन्दसेचनं कुरु। प्रकर्षेण प्लवनं द्विसप्ततिसहस्रनाडीमार्गेषु आसेचनं कुरु॥

## आण्डीभव ज मा मुहुः॥

ऋचोऽयमर्थः—आण्डी पिण्डाण्डं ब्रह्माण्डञ्च, ङिप्रत्ययान्तः, भव

पिण्डाण्डरूपेणास्मदीयेन ब्रह्माण्डरूपेण वाह्येन भवदीयेन प्राप्नुहि, भवत्सायुज्यं देहीत्यर्थः। अज अवगच्छ। मुहुर्म्मामवगच्छ, अनुगृहाणेत्यर्थः। अजगतौ इति धातोः अकारलोपश्छान्दसः॥

## सुखादीन्दुःखनिधनाम्॥

अस्यार्थः—सुखमत्ति आदयतीति सुखादी सुखसम्पादकः इन्दुः चन्द्रः वैन्दवस्थानगतः खनिधनां खं वैन्दवस्थानमेव नितरां धनं यस्याः सा ताम्। यद्वा—सुखादीं सुखप्रथमां सुखात्मिकाम्। दुःखस्य निधनं नाशो यत्रेति दुःखनिधनां अविज्ञातदुःखगन्धामित्यर्थः। यद्वा—सुखादीं शोभनेन खेन इन्द्रियेण मनसा आदीं आद्यां मनोविद्यामित्यर्थः। दुःखनिधनां दुःखानां दुष्टेन्द्रियाणां चक्षुरादीनां अगोचरामित्यर्थः॥

## प्रतिमुञ्चस्व स्वां पुरम्॥

स्वां भगवतीं पुरं देहं प्रतिमुञ्चस्व अधितिष्ठ॥

## मरीचयः स्वायम्भुवाः॥

अस्यार्थ :—स्वयं भगवत्याः सकाशात् भवा उत्पन्नाः मरीचयो मयूखाः। सर्व्वाणि भुवनानि आवृत्य वर्त्तन्त इति वाक्यशेषः। सूर्य्यचन्द्राग्नीनां प्रकाशकत्वं स्वायम्भुवमरीचिप्रसादादेवेति उत्तरत्र वक्ष्यते॥

## ये शरीराण्यकल्पयन्॥

अस्यार्थः—ये मयूखाः षष्ट्युत्तरत्रिशतसंख्याकाः शरीराणि कालात्मकानि षष्ट्युत्तरत्रिशतसंख्याकानि दिनानि तान्येव संवत्सरः। 'हायनात्मा प्रजापतिः' इति श्रुतिः॥

## ते ते देहं कल्पयन्तु॥

ते मरीचयः ते तव भगवत्याः देहं कल्पयन्तु देहमाश्रयन्तु। देहशब्देन देहावयवस्वरणमुच्यते। भवच्चरणोत्पन्ना इत्यर्थः॥

## मा च ते ख्या स्म तीरिषत्॥

ते तव ख्या ख्यातिः ज्ञानं मा च तीरिषत् अस्मान् न जहातु। भवद्विषयज्ञानं अस्माकं सदा सिध्यत्वित्यर्थः॥

इतःपरं पृश्नयश्चक्रविद्यानुष्ठाने त्वरमाणाः परस्परं सङ्गिरन्ते —

उत्तिष्ठत मा स्वप्त । अग्निमिच्छध्वं भारताः ।

राज्ञः सोमस्य तृप्तासः । सूर्य्येण सयुजोषसः ॥

अयमर्थः—हे भारताः भायां भारूपायां ज्योतीरूपायां चक्रविद्यायामिति यावत् रताः उपासनारताः । यद्वा—भारत्याः सरस्वत्याः श्रीविद्याया उपासकाः । सामान्यविहितप्रत्ययस्य विशेषवाचित्वात् भारता इति । उत्तिष्ठत उपासनोपक्रमं कुरुत । मा स्वप्त अप्रमत्ता भवत । अग्निमिच्छध्वं स्वाधिष्ठानगताग्निं प्रज्वलयत । राज्ञश्चन्द्रस्य । उमया सहितः सोमः । चन्द्रमण्डलान्तर्गतबैन्दवस्थानगतत्वात् देव्याः चन्द्रस्य सोमशब्दवाच्यत्वसिद्धिः । तस्य चन्द्रस्य निष्यन्दैः तृप्तासः तृप्ताः । सूर्य्येण अनाहतचक्रविशुद्धिचक्रयोर्मध्ये स्थितेन सूर्य्येण सयुजा, अग्निचन्द्रयोर्मध्यवर्त्तिना इत्यर्थः । यद्वा—सूर्य्येण सयुजा राज्ञा तृप्तासः इत्यन्वयः । कीदृशाः उषसः प्लुष्टमायामयक्लेशाः । यद्वा—उषसः उषःकाले ध्यानरताः तस्मिन् काले भगवतीनिदिध्यासनादेर्विहितत्वात् ।

इतः परं पूजासामग्रीमुपदिशन्ति पृश्नय :—

युवा सुवासाः ॥

अयमर्थः—युवा दृढाङ्गः स्वस्थः । सुवासाः शुभ्रवस्त्रः । इदं शुभ्राभरण शुभ्रमाल्यादीनामुपलक्षकम् । एवंविधः सन् पूजयेदिति शेषः ॥

श्रीचक्रस्य स्वरूपं तावदाहुः—

अष्टाचक्रा नवद्वारा ॥

अयमर्थः—अष्टकोण-दशकोणद्वितय-चतुर्द्दशकोणाष्टपत्र-षोड़शपत्रत्रिवलयत्रिरेखात्मकानि अष्टाचक्राणि यस्याः सा अष्टाचक्रा । अतएव नवद्वारा नवानि द्वाराणि त्रिकोणरूपाणि यस्याः सा नवद्वारा ॥

देवानां पूरयोध्या ॥

अयमर्थः—देवानामिन्द्रादीनां पूज्यत्वेन सम्बन्धिनी पूः श्रीविद्यानगरम् । यद्वा, दीव्यन्तीति देवाः पञ्चविंशतितत्त्वानि तेषां पूरधिष्ठानम् । यद्वा, सूर्य्य चन्द्राग्नीनां पूः सोमसूर्य्यानलात्मकत्वात् श्रीचक्रस्य । तस्य पुरत्रयसमष्टिरूपत्वात् पूरित्येक वचनसिद्धिरिति ध्येयम् । अयोध्या असाध्या अनधिकारिणां मन्दभाग्यानामिति शेषः ॥

तस्यां हिरण्मयः कोशः ।
स्वर्गो लोको ज्योतिषावृतः ॥

अस्यार्थः—तस्यां पुरि श्रीचक्रमध्ये हिरण्मयः कोशः सहस्रदलकमलकोश इत्यर्थः। वैन्दवस्थाने सहस्रदलकमलकोशस्य विद्यमानत्वात्। तस्य कोशस्य ज्योतिषा स्वर्गो लोक आवृतः। ज्योतिर्लोकः स्वर्गलोक इत्यर्थः ॥

अथ पृश्नयः चक्रविद्योपसनायाः फलमाहुः—

यो वै तां ब्रह्मणो वेद अमृतेनावृतां पुरीम् ।
तस्मै ब्रह्म च ब्रह्मा च आयुः कीर्त्तिं प्रजां ददुः ॥

अयमर्थः—ब्रह्मणः ब्रह्मस्वरूपायाः भगवत्याः तां पूर्व्वोक्तां अमृतेन आवृतां चन्द्रमण्डलगलत्पीयूषधारावृतां पुरीं श्रीचक्ररूपां त्रिपुरायाः पुरं यो वेद ज्ञान-पूर्व्वकमर्च्चनं करोति तस्मै विदुषे अर्च्चकाय ब्रह्म च ब्रह्मस्वरूपा भगवती, ब्रह्मा च ब्रह्मस्वरूपो भगवान्। चकारद्वयं उभयोर्म्मेलनं समुच्चिनोति, मिलितयोरेव वैन्दवस्थाने सहस्रारे सुधासिन्धुमध्ये मणिद्वीपे चिन्तामणिगृहे निवासात्। एतौ उभौ आयुः जीवितं कीर्त्तिं यशः प्रजां सन्तानं ददुः दद्यातां इत्यर्थः। व्यत्ययो बहुलं इति वचनव्यत्ययः ॥

शिवशक्त्योः तत्रैव निवासमाहुः—

विभ्राजमानां हरिणीं यशसां संपरीवृताम् ।
पुरं हिरण्मयीं ब्रह्मा विवेशापराजिता ॥

अयमर्थः—विभ्राजमानां अनन्तकोटिसंख्याककिरणैरिति शेषः प्रकाश-मानां। हरिणीं हिरण्यवर्णां "हिरण्यवर्णां हरिणीम्" इति श्रुतेः। यशसा कीर्त्त्या सम्यक्परिवृतां, ये ये लोके कीर्त्तिमन्तः ते सर्व्वे भगवतीप्रसादसमासादित-कीर्त्तिमन्त इत्यर्थः। तां वैन्दवीं पुरं चिन्तामणिगृहं ब्रह्मा सदाशिवः 'ब्रह्मा शिवो मे अस्तु सदाशिवोम्' इतिश्रुतेः पुंलिङ्गब्रह्मशब्दसदाशिवशब्दयोः एक-एवार्थः प्रतीतः। विवेश अपराजिता सादाख्या चन्द्रकला विवेश। वाक्य-द्वयेन उभयोः प्रवेशभेदप्रतिपादनं 'वैन्दवे चिन्तामणिगृहे सदाशिवः सर्व्वदा सन्निहितः। अपराजिता कुण्डलिनी शक्तिः षट्चक्राणि भित्वा भूयोभूयः प्रविशति इतीममर्थं ज्ञापयितुम् ॥

शिवशक्त्योः तस्मिन् चक्रे अवस्थितिप्रकारमाहुः—

**पराङेत्यज्यामयी। पराङेत्यनाशकी॥**

अस्यार्थः—पराङ् अधोमुखी चक्ररूपिणी। शिवशक्त्योर्मध्ये शक्तिः अज्यामयी ज्यानिरहिता नाशरहिता नित्या दुःखरहिता आनन्दमयी इत्यर्थः। एति वर्त्तते। यद्वा—अज्यामयी ज्या भूमिः तेन पञ्चभूतानि लक्ष्यन्ते, तन्मयी न भवतीत्यज्यामयी, मनस्तत्त्वादिमयी शिवचक्रात्मकचतुस्त्रिकोणात्मिकेति यावत्, शिवकोणानाम् बैन्दवस्थानादधः ऊर्द्धमुखतया अवस्थानात्। अनाशकी नाशरहिता शक्तिचक्रात्मकपञ्चयोन्यात्मिका। पराङ् अधोमुखी एति, शक्तियोनीनामपि शिवकोणापेक्षया अवाङ्मुखत्वात्। एवं शिवकोणशक्तियोनीनाम् परस्परमवाङ्मुखत्वं चक्रलेखनक्रमादवगम्यते॥

विदुषः फलमाहुः—

**इह चामुत्र चान्वेति। विद्वान् देवासुरानुभयान्॥**

अस्यार्थः—दीव्यन्तीति देवाः एकादशेन्द्रियाणि। असुराः असवः प्राणाः प्राणादिपञ्च वायवः तान् रान्ति आददत इति पञ्चतन्मात्रा उच्यन्ते। उभयान् उभयत्र देवासुरेषु अन्वितान् मायाशुद्धविद्यामहेश्वरसदाशिवान्। यो विद्वान् पञ्चविंशतितत्त्वजातं विदित्वा शिवशक्तिसम्पुटात्मकं पञ्चविंशतितत्त्वविलक्षणं षड्विंशतत्त्वं यस्तु वेत्ति स विद्वान् इह च इह लोके पूजातारतम्यवशात् अमुत्र च परलोके सार्ष्टिसालोक्यसामीप्यसारूप्यसायुज्यात्मिकया पञ्चविधया मुक्त्या अन्वेति युज्यते सार्ष्ट्यादिस्वरूपंसप्रपञ्चं पुरस्तात् प्रपञ्चयते।

अथ देवासुरोभयज्ञानोपायमाहुः—

**यत्कुमारी मन्द्रयते यद्योषिद्यत् पतिव्रता।**

**अरिष्टं यत् किञ्च क्रियते अग्निस्तदनुवेधति॥**

अयमर्थः—कुण्डलिनीशक्तेरवस्थात्रयं विद्यते यद्यस्मिन् चक्रे कुमारी कुमारावस्थामापन्ना प्रथमं सुप्तोत्थिता मन्द्रयते मन्द्रस्वरं करोति कूजतीत्यर्थः कुण्डलिन्याः सर्व्वात्मकत्वात्। सर्व्वो हि सुप्तोत्थाने मन्द्रस्वरं करोति, तद्वदित्यर्थः। यद्योषित् यस्मिन् चक्रे कुलयोषित् विष्णुग्रन्थिपर्य्यन्तं गत्वा, रातीति शेषः।

कुलयोषित् कुलं त्यक्त्वा राति विष्णोः प्रभेदने।

इति सनत्कुमारवचनात्। यत् यस्मिन् चक्रे पतिव्रता पत्या सदाशिवेन सार्द्धं

सहस्रदलकमले विहरमाणा। रिष्टं शुभाभावं 'रिष्टं क्षेमे शुभाभावे' इत्यभिधानात्, तदन्यदरिष्टं शुभं अमृतास्वादामित्यर्थः। यत् किञ्चित् क्रियते तत् स्वाधिष्ठानगतोऽग्निः अनुवेधति सहायं करोति। अतश्च अभ्यासवशात् वायुना अग्निं प्रज्वाल्य अग्निशिखानुविद्धविलीनचन्द्रमण्डलगलत्पीयूषधारानुभवे पञ्चविंशतितत्त्वातीता परमेश्वरी इति ज्ञातुं सुशकमित्युपदेशः॥

चक्रविद्योपासनं वर्णिनां आश्रमिणां ज्ञानिनामज्ञानिनाञ्च फलदायकमित्यभिसन्धायाहुः—

**अशृतासः शृतासश्च यज्वानो ये ऽप्ययज्वनः**

**स्वर्य्यन्तो नापेक्षन्ते॥**

अयमर्थः—अशृतासः अपक्वाः अक्षपितान्तःकरणकल्मषा इत्यर्थः। शृतासश्च पक्वाश्च क्षपितान्तःकरणकल्मषा इत्यर्थः। यज्वानः यजनशीलाः त्रैवर्णिका आश्रमिणश्च। अयज्वनः यागरहिताः शूद्रादयः। 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' इति श्रुतिः त्रैवर्णिकैकनियताधिकारयज्ञशब्दवाच्याग्निष्टोमादिपरा। चक्रविद्योपासने शूद्राणामपि अधिकारचोदनात् निषादस्थपतिवत् वैदिके कर्म्मण्यधिकारसिद्धेः न काचित् क्षतिः। यन्तः, इण् गतौ, चक्रविद्यामवगच्छन्तः स्वः स्वर्गं नापेक्षन्ते॥

चक्रविद्योपासनाव्यतिरेकेण देवतान्तरोपासनायामनिष्टमाहुः—

**इन्द्रमग्निञ्च ये विदुः सिकता इव संयन्ति।**

**रश्मिभिः समुदीरिताः अस्माल्लोकादमुष्माच्च॥**

अयमर्थः—सुरासुरमुख्यवन्दितचरणारविन्दायाः सर्व्वभूतान्तर्यामिन्याः सर्व्वव्यापिन्याः जगदुत्पत्तिस्थितिलयहेतोश्चक्रविद्याया अन्यत्वेन ये इन्द्रमग्निं, चकारात् यमादिलोकपालान् पृथिव्यादिसदाशिवान्ततत्त्वानि च, उपास्यत्वेन ये विदुः ते सिकता इव वालुककणा इव संयन्ति, परस्परं विरलाः भ्रष्टा भवेयुरित्यर्थः। किञ्च—रश्मिभिः यमपाशैः समुदीरिताः संयता बद्धा भवेयुः इत्यर्थः। किञ्च—अस्माल्लोकात् अमुष्माल्लोकाच्च भ्रष्टा भवेयुरिति शेषः।

अतएव श्रुत्यन्तरम्—

अन्धं तमः प्रविशन्ति येऽविद्यामुपासते॥

अयमर्थः—अविद्यां विद्याविरुद्धां ज्ञानमार्गविरुद्धां इन्द्रादिसेवां 'वाचं

धेनुमुपासीत' इत्येवमध्यारोपितसेवाञ्च ये कुर्व्वते ते अविद्वांसः अन्धं तमः प्रविशन्ति अन्धतामिस्रं प्रविशन्तीत्यर्थः। चकारः प्रकरणसमाप्तिद्योतकः॥

ऋषिभिरदात् पृश्निभिः॥

सभाप्तेयमुपनिषत्॥

ॐ तत् सत्॥

पृश्निनामभिः ऋषिभिः एतत् सर्व्वमदात् अदायि। कर्म्मणि लुङ्, छान्दसः कर्म्मणि प्रत्ययलोपः, कर्त्तृप्रत्ययव्यत्ययश्च। ऋषिभिः पृश्निभिः एवमुक्तमित्यर्थः। यद्वा -पृश्निभिः ऋषिभिः सहितः ऋषिसङ्घः एवमदात् वाचमिति शेषः उक्तवानित्यर्थः॥

समाप्तेयं लक्ष्मीधराचार्य्यकृता टीका॥

---

# कालिकोपनिषत् ।

ॐ अथ ह एनां ब्रह्मरन्ध्रे वह्नि[1]रूपिणीमाप्नोति । शुभगां त्रिगुणामुक्त्वा । शुभगा तु कामरेफेन्दिराबिन्दुमेलनरूपा । समष्टिरूपिणी । एतत्त्रिगुणितमादौ । तदनु-कूर्च्चद्वयम् । कूर्च्चबीजन्तु । व्योमषष्ठस्वरबिन्दुमेलनरूपम् । तदेव द्विरुच्चार्य्य । भुवनाद्वयम् भुवना तु व्योमज्वलनेन्दिराशून्यमेलनरूपा । तद्द्वयम् । दक्षिणे कालिके इति अभिमुख्यता । तदनुबीजसप्तकमुच्चार्य्य । वह्निजायामुच्चरेत् । मत्वा शिवमयो भवेत् । सर्व्वसिद्धीश्वरो भवेत् । गतिस्तस्यास्ति । नान्यस्य । स तु नारीश्वरः । स तु देवेश्वरः । इति ॥ अभिनवजलदसङ्काशा । घनस्तनी । कुटिल-दंष्ट्रा । स(श)वासना कालिका ध्येया । त्रिकोणं त्रिकोणं नवकोणम् । पद्मम् । तस्मिन् देवीं षडङ्गेनाभ्यर्च्चय । तदिदं सर्व्वाङ्गम् । ॐ काली कपालिनी कुल्ला कुरु-कुल्ला विरोधिनी । विप्रचित्ता । उग्रा । उग्रप्रभा । दीप्ता । नीला । घना । बलाका । मात्रा । मुद्रा । मिता । सैव पञ्चदशकोणगा । ॐ ब्राह्मी माहेश्वरी चैन्द्री चामुण्डा कौमारी अपराजिता । वाराही नारसिंही च अष्टपत्रगा । द्वितीयचतुःषष्ठाष्ट[दश]-द्वादशचतुर्दशषोड्शस्वरभेदेन प्रथमेन । प्रणवेन वा । मन्त्रं विदध्यात् । अङ्गे तन्मूले(ना)वाहनम् । तदेव पूजनम् । य एनं मन्त्रराजं नियमेन अनियमेन वा । लक्षं लक्षमावर्त्तयति । स पाप्मानं तरति । स दुष्कृतानि तरति । स ब्रह्म-भाग्भवति । सोऽमृतत्वभाग्भवति । स सर्वशोकं तरति । स आयुरारोग्यमैश्वर्य्यं लभते सदा । पञ्चमकारेण पूजयेत् । सदा भक्तो भवेत् । सदा वेदभक्तो भवेत् । स सर्व्वशास्त्रं जानाति । स सर्व्वप्रत्ययकारी भवति । राजानो दासतां यान्ति । सिद्धमन्त्रस्य जपिनाम् । यश्च पाश्चात्यम् । तन्मयम् । शिव एव हि । जप्ता सर्व-दैवतम् । मन्त्रं बीजम् । यः स्वयम् । शिव एवायम् । अणिमादिविभूतीना-मीश्वरः । कालिकां लभेत् । आवयोः पात्रभूतोऽसौ । मुक्तो त्यक्तकल्मषः । जीवन्मुक्तः स विज्ञेयो यः स्मरेद् घोरदक्षिणाम् । दशांशं होमयेत् । तदनु तर्पयेत् । अथ ह एकेषु यान् कामान् वाञ्छयति भीषयति । अनिरुद्धज्ञानात् । अनिरुद्ध-सरस्वती । अथ एकं कालिकामनुं जपेत् । यं (यः) मत्स्यज्ञात्मा ज्ञानवैराग्ययुक्तः । शाम्भवं(व) दीक्षासुरतः । शाक्तो वा दिवा ब्रह्मचारी । रात्रौ नग्नः । सर्वदा मैथुना-

---

१ स्वरूपिणीति पाठान्तरम् ।

सक्तमानसः। जपपूजादिनियमो योषित्सु प्रियकरः। सुभगोदकेन तर्पणम्। तेनैव पूजनम्। सर्व(दा)कालीरूपा(पमा)त्मानं विभावयेत्। सर्व्वयोषिदाश स)क्तो भवति। सर्व्वहत्यां तरति। अथ पञ्चमकारेण सर्व्वमाप्नोति। विद्यां पशुं धनं धान्यं सर्व्वशस्यञ्च। कवित्वञ्च। नान्यः परमः पन्था विद्यते। मोचाय। ज्ञानाय। धर्म्माय। तत्सर्वं भव्यं यत्किञ्चित् दृश्यादृश्यमानं। स्थावरजङ्गम(मं)तत्सर्व्वम्। कालिकातन्त्रे तु। तं प्रोक्तम्। वेदेऽयम्। मनुजापी। स पाप्मानं तरति। सतु अगम्यागमनं तरति। स भ्रूणहत्यां तरति। स सर्व्वपापं तरति। स सर्व्वसुखमाप्नोति। स सर्वं जानाति। स सर्व्वसन्न्यासी भवति। स विरक्तो भवति। स वै सर्व्ववेदकारी भवति। स सर्व्वमन्त्रजापी भवति। स सर्व्वशास्त्रवेत्ता भवति। स सर्व्वयन्त्राधिकारी भवति। आवयोर्मित्रभूतो भवति। इत्याह भगवान् शिवः। निर्विकल्पेन मनसा यः सर्वं करोति। अथ ह एनं मूलाधारे स्मरेद्दिव्यं त्रिकोणं तेजसां निधिम्। तस्याग्निरेखामानीय अध ऊर्द्ध्वं व्यवस्थितम्। नीलतोयदमध्यस्थतडिल्लेखेव भास्वराम्। नीलां सुपीतां भास्करवदुपमाम्। तस्याः शिखाया मध्ये परमोर्ध्वं व्यवस्थिताम्। स ब्रह्मा स शिवः। स स्मरः स सर्वपापैः प्रमुच्यते। स महापातकेभ्यः पूतो भूत्वा सर्व्वसिद्धिं कृत्वा कैवल्यं भजतीति। भैरवोऽस्य ऋषिरनुष्टुप्छन्दः लज्जा बीजं कूर्चं शक्तिः कवित्वार्थे विनियोगः। ऋषिच्छन्दोदैवतं ज्ञात्वा मन्त्रफलमश्नुते। अथ सर्वां विद्यां प्रथममेकं द्वयं त्रयं वा पुटितं कृत्वा वा जपेत्। गतिस्तस्यास्तीति। नान्यस्य। इह गतिः। ॐ सत्वं(त्यं) तत्सर्वम् (तत्सत्)। अथ हैनं गुरुं परितोष्य गोहिरण्यादिभिर्गृह्णीयात्। मन्त्रराजम्। गुरुरपि शिष्याय। सत्कुलीनाय शुश्रूषवे॥ स्त्रियं दृष्ट्वा स्वयं परिजप्य निशायां विहरेत्। एकाकी शिवगेहे। लक्षं तदूर्ध्वं वा जप्त्वा देयम्। ॐ तत्सत्यम्। ॐ तत्सत्यम्। नान्यप्रकारेण वा सिद्धिर्भवतीति। कालिकामनौ वा भावयति। त्रिपुरामन्त्रे वा सर्व्वस्य दुर्गामनौ सिद्धिर्भवतीति॥

इति अथर्व्वसौभाग्यकाण्डे कालिकोपनिषत्
समाप्ता।

---

ॐ नमः शिवाय।

# तारोपनिषत्।

अथ हैनां ब्रह्मरन्ध्रे तारिणीमाप्नोति। तारयतीति तारा। तारा स्यादर्द्धपञ्चाक्षररूपा ब्रह्मविष्णुमहेश्वरसदाशिवविन्दुमेलनरूपा विद्या। तथा प्रथमं भुवनामुच्चरेत्। व्योमज्वलनेन्दिराकलाविन्दुमेलनरूपा। ततो वधूमुच्चरेत्। (?) षोड़शहल तूर्य्यस्वरविन्दुमेलनरूपा। ततः कूर्च्चं व्योमषष्ठस्वरविन्दुमेलनरूपम्। नीलाख्या सरस्वती। इमामधीयानस्तर्कागमपुराणकाव्यादिवागीश्वरो भवति। तारादिकास्वान्ता चेत् तारा भवति। एतस्या ज्ञानमात्रेण जीवन्मुक्तो भवेद् वै। तामित्य सर्व्वविद्याज्ञानवान् भवति। वारत्रयं यः पठेत्। स सन्न्यासी शिव एव सर्व्वदेवमयो भवति। तारत्रहिता पुनरेकजटा भवति। एतद्रूपामधीयाना समानफलदा। नात्र मित्रामित्रादिविचारणा। सिद्धविद्यानामासां फलं दक्षिणावत्। अथातो मन्त्रान् जलशुद्धिक्षालनाचमनकराक्षतप्रक्षेपत्रिविधविघ्नोत्सारणभूम्यभिमन्त्रणं जलाभ्युक्षणकुसुमशुद्धियन्त्रनिर्म्माणरूपानागमवादी लिखेत्। एकलिङ्गे पितृभूमौ चिरशून्यनिर्ज्जने देवालये विजने चतुष्पथे उज्जटे भूधरतटे निर्ज्जने देशे निर्ज्जनदेवागारे श्रीफलमूले विजने नदीतीरे चैत्यहट्टे वटाश्वत्थमूले स्वगृहे वा पूजा। पञ्चतत्त्वविधिना। अक्षोभ्यमुनिरस्यापि छन्दस्तु बृहती कूर्चं बीजं शक्तिर्भुवना वधूः कीलकम्। एकजटा तारिणी वज्रोदकं कोग्रजटा महाप्रतिसरा पिङ्गोग्रैकजटा आभिमुख्येन षडङ्गानि इन्द्रनीलवर्णाभा मूलमन्त्रभाञ्जि मूलाधारनाभिहृदयब्रह्मरन्ध्रेषु भुवना वधूकूर्चशोषणदहनप्रोत्सारणाम्रतीकृतिर्मूर्त्तिर्जननीया तत्त्वबोधेन। सजलप्रावृषेण्यघनराजिनिभाप्य(द्य)ष्टवर्षा पीनोन्नतवक्षोरुहा नानाविधस्वग्रलङ्कारविराजिता। खर्व्वा लम्बोदरी भीमा व्याघ्रत्वगावृता महाचीनगुरुकपालपञ्चमुद्रा विराजिता भीमदंष्ट्रा करालास्या पिङ्गलोग्रैकजटा खड्गकर्त्तृदक्षिणकरयुगा कपालोत्पलवामकरयुगा अरुणत्रिनेत्रा सावेशस्मरयुता अक्षोभ्यमौलीन्दुप्रज्वलिता पितृभूमिमध्यस्था ध्येया। चित्ततोषणानन्तरं स्वयं तारिणीति आत्म(त्मा)भेदतया आत्मनि सन्तोष्य पूर्व्वमोङ्कारं तत आकारः परे सुरेखे वज्ररेखे उत्तरे कूर्चं तदन्तास्त्ववक्त्रिजाया। चतुरस्त्राष्टदलत्रिकोणरूपं यन्त्रम्। लक्ष्मीः सरस्वती रतिः प्रीतिः कीर्त्तिस्तुष्टिः शान्तिः सदाशिवस्यात्र गमागमवशात् पुष्पाञ्जलियोगमूलमन्त्ररूपपटलविहित-

कुसुमपरद्रव्यदानतर्पणम् । नैवेद्यभूतवलिदानादिसुख्य(मुख्य)षडङ्गानि । गुरूनपि यथादेशं । पूर्व्वादिदिशि गणेशवटुकक्षेत्रपालयोगिन्यः । आग्नेयादिषु वैरोचन-शङ्खपाण्डर (१) तारकान् । त्रिकोणेषु बीजत्रयं । दिशि पद्मान्तकयमान्तकविघ्नान्तकनरकान्तकान् । त्रिकोणेषु बीजत्रयं ब्राह्मी वैष्णवी माहेश्वरी शक्तित्रययुता यथायोग्यं वस्त्रालङ्कार-महाशङ्खमालया लक्षं नियमेनानियमेन वा सिद्धविद्यानां देवज्ञानप्रकाशकानां संज्ञानसङ्कान् । कालिकाविहितानि कल्पानि कुर्य्यात् । अथ हैनं भगवन्तं परमेष्ठिनं सनत्कुमारः पप्रच्छ येन सर्व्वस्य सर्वं भवति म(त)मन्त्रं कथय भगवन् कोहि मन्त्राणां परमा मन्त्रदेवतानाञ्च दैवतं किमुतास्य विद्यायुगशोधनं पुत्रपौत्रकवित्तञ्च धनधान्यकवित्तञ्च निर्व्वाणमोक्षं लभते बुधः । केन विधिना आराध्यते केन मन्त्रेण सर्व्वमिति । अथाह भगवान् ब्रह्मा मन्त्राणां परमो मन्त्रस्तारेति परमा तारा सा देवतानाञ्च देवता । सर्व्वदा स्त्रीषु मध्ये जपेत् । स्त्रिया योनौ सदा जपेत् । ऋतुमतीं गच्छेत् । तुलसीं त्यजेत् एवं कृत्वा गुरुः शिष्योऽयुतद्वयं निशायां एकाकी शून्यगृहे तिमिरालये । तदा सर्व्वस्य सर्व्वन्तरति यशस्यन्ते नराः ॥ ॐ

इति तारोपनिषत् समाप्ता ।

ॐ ताराये नमः ।

---

(१) पद्मनाभअसिताभनामकमामकपाण्डर ।

ॐ नमः काल्यै ।

# अद्वैतभावनोपनिषत्

अद्वैतभावनां वक्ष्ये शृणुष्व कमलानने ।
यस्य विज्ञानमात्रेण भवेद्गङ्गाधरः स्वयम् ॥

अहं स्त्री । पुरुषोऽहम् । सदाशिवोऽहम् । परमप्रकृत्यो[तिर]ऽहम् । परमपुरुषोऽहम् । नादोऽहम् । बिन्दुरहम् । कलाश्चाहम् । शब्दब्रह्माहम् । क्रियायोगोऽहम् । ब्रह्माहम् । विष्णुरहम् । सौरोऽहम् । ब्राह्मोऽहम् । वैष्णवोऽहम् । शिवाऽहम् । नानाशास्त्रयहम् । असुरोऽहम् । सुरोऽहम् । उच्चाररहितोऽहम् । विद्याऽहम् । वेदाश्चाहम् । वेदशाखिन (वेदसाक्षिण)श्चाहम् । वेदक्रियाऽहम् । कर्म्मयोगोऽहम् । धर्म्मकर्म्माऽहम् । पिताऽहम् । माताऽहम् । पुत्रोऽहम् । गुरुरहम् । आचार्य्योऽहम् । आगमोऽहम् । रामायणोऽहम् । महाभागवतोऽहम् । महाभारतोऽहम् । श्रीभागवतोऽहम् । श्रुतिशास्त्राण्यहम् । मन्त्रोऽहम् । मन्त्रार्थोऽहम् । स्तवोऽहम् । कवचोऽहम् । अहं सहस्रनामानि । अहं गायत्री । बीजान्यहम् । कूटाक्षरोऽहम् । त्र्यक्षरोऽहम् । पञ्चाशन्मातृकाऽहम् । पञ्चभूतान्यहम् । पञ्चमहाभूतान्यहम् । तत्त्वान्यहम् । स्थूलोऽहम् । सूक्ष्मोऽहम् । कुलाकुलाश्चाऽहम् । कुलाचलश्चाऽहम् । प्रमाणादि षोडशपदार्थोऽहम् । ऋषयश्चाऽहम् । मुनयश्चाऽहम् । लक्ष्मीरहम् । स्त्रियोऽहम् । श्रियोऽहम् । प्रियोऽहम् । गौर्य्यहम् । भूतोऽहम् । कुष्माण्डोऽहम् । प्रेतोऽहम् । लोकपालाश्चाऽहम् । ग्रहाश्चाऽहम् । दिग्गजाश्चाऽहम् । दशदिशोऽहम् । ऊर्द्धोऽहम् । अधोऽहम् । चतुर्द्दशभुवनान्यहम् । तत्स्थोऽहम् । तदसंप्रदर्श्यशिष्ठानन्तरम् । तदहं संप्रकुर्य्यात् ।

जपेन्मन्त्रं विधानेन संख्यां कुर्वन् विधानतः ।
न दोषो मानसे जापे इत्याह भगवान् शिवः ॥

इति सदाशिवप्रणीतं अद्वैतभावं समाप्तम् ।

---

अथातो धर्म्मजिज्ञासा। ज्ञानं बुद्धिश्च। ज्ञानं मोक्षस्य कारणम्। मोक्षात् सर्व्वज्ञता बुद्धिः। प्रपञ्चेश्वरः। पञ्च विषयाः प्रपञ्चाः पञ्चमकाराः। तेषां ज्ञानस्वरूपाः। योगो मोक्षः। कुलधर्म्मकरणं ज्ञानम्। अनित्यज्ञानम्। ज्ञाने धर्म्मः। एषां मोक्ष इत्यध्यात्मः। सर्व्वेन्द्रियाणां नयनप्रधानम्। अधर्म्मविहिता न कार्य्या धर्म्मः शाम्भवम्। आत्मनोऽनिन्दा। गुरुरेकः सर्व्वत्रैकता। बुद्धिर्मतिमता प्रकाव्यां (प्राकाव्य') न कुर्य्यात्। पशुभाषणं। अन्यायो न्यायः। किमपि आत्मरहस्यं न वदेत् शिष्याय वदेत्। अन्तः शाक्तः। वहिः शैवः। लोके न निन्दात्। लोके वैष्णवः। कौलं न निन्दात्। प्रकाव्ये न निरयः। न तिष्ठेत्। नियमेन नियमान्न मोक्षः। एतजज्ञा[ज्ञा]नं व्रतञ्चरेत्। कौलं प्रतिष्ठां कुर्य्यात्। निःसङ्ग एव भवेदित्याध्यात्मम्। अनित्यकर्म्मलोपः। मपञ्चमलाभे क्रमं कुर्य्यात्। अत्र शक्तिप्रधानम्। सर्व्वत्र निर्भयता फलमात्मा लतारूपम्। शक्तिषु निष्ठुरतां न कुर्य्यात्। न स्वेच्छया पञ्चमं स्वीकुर्य्यात्। कुलभ्रष्टं न सम्भाषयेत्। वीरस्त्रियमनिच्छाया न रमेत्। स्त्रियं न हन्यात् एतासु जपेत् प्रातरुत्थाय देशिकः। तस्याज्ञासिद्धिर्भवति। इति पूजां कुर्व्वन्ति दिव्यन्ते नन्दने वने।

इति सदाशिवप्रणीता कौलोपनिषत्
समाप्ता।

---